# संस्कृतशोधप्रविधिः

## (Methodology of Research in Sanskrit)



डॉ. सत्यनारायण आचार्यः

# संस्कृतशोधप्रविधिः

**( Methodology of Research in Sanskrit )**

(विशिष्टाचार्य- M. Phil )-विद्यावारिधि -( Ph. D. )च्छात्राणां कृते नितरामुपयोगी )



संपादकः

डॉ. सत्यनारायण आचार्यः

उपाचार्यः, साहित्यविभागाध्यक्षश्च

राष्ट्रियसंस्कृतविद्यापीठम् ( मानितविश्वविद्यालयः )

तिरुपतिः - ५१७ ५०७ ( आन्ध्रप्रदेशः )

**संस्कृतशोधप्रविधिः**

**( Methodology of Research in Sanskrit )**

(विशिष्टाचार्य- M. Phil )-विद्यावारिधि -( Ph. D. )च्छात्राणां कृते नितरामुपयोगी )

संपादकः -

डॉ. सत्यनारायण आचार्यः

*उपाचार्यः,*

*साहित्यविभागाध्यक्षश्च*

*राष्ट्रियसंस्कृतविद्यापीठम् (मानितविश्वविद्यालयः), तिरुपतिः - ५१७ ५०७*

( C ) प्रकाशिका -

**श्रीमती सौदामिनी त्रिपाठी**

सिद्धमहावीरपाटणा

पुरी - ७५२००२

ओडिशा

दूरवाणी - (09966918130 / 09437232432 )

**प्रथमं प्रकाशनम्** - 2005

पुनर्मुद्रणम् (संस्कृतदिवसः) - 2012

**मूल्यम्** - रू. ८०/-

मुद्रकः - Students Offset, Tirupati.

# समर्पणम्



"लसतु संस्कृतं चिरं गृहे गृहे च पुनरपि" - इति संकल्पवाक्यं सफलीकर्त्तुं "लोकभाषा हि संस्कृतम्" चेति मन्त्रेण सदा पवित्रान्तःकरणानां मम संस्कृतसंभाषण-पठन-लेखनकर्मसंप्रेरकाणां संस्कृतसेवावतंसानां संस्कृतलोककल्याणाय **लोकभाषाप्रचारसमिति**प्रभृतिसंस्थासंस्थापकानां सदानन्दमयानामग्रजवर्य्याणां **डॉ. सदानन्ददीक्षित-**महोदयानां करकमलेषु तदीयश्रमकौशलफलमिदमद्य सश्रद्धं समर्पयामि ।

स्नेहानुबद्धः

सत्यनारायणः

# निवेदनीयम्

राष्ट्रियसंस्कृतसंस्थाने मम कर्मनियुक्तेः परं संस्कृतशोधकार्यप्रसङ्गे विचारयितुमनेके छात्रबान्धवाः सम्मिलिताः । तैः साकं संस्कृत-शोध-प्रविधिविषये समालोचयितुमवसरः कश्चित् प्राप्तः । श्रीजगन्नाथ-संस्कृत-विश्वविद्यालयप्रभृतिषु शिक्षानुष्ठानेषु विशिष्टाचार्यकक्षासु शोधप्रविधिविषये पाठ्यक्रमः प्रचलतीति ज्ञात्वा आनन्दितः । परन्तु संस्कृतग्रन्थानामभावात् विद्यार्थिनः विषयेऽस्मिन् बहुक्लेशं स्वीकुर्वन्तीति श्रुत्वा ग्रन्थस्यास्य संपादने प्रवृत्तोऽभवम् ।

सर्वथा निर्विघ्नेन एतत्कर्मसंपादनाय शुभाशीर्वादप्रदानेन 'शुभाशंसा' लेखनेन च मामनुगृहीतवद्भ्यः श्रीगुरुकल्पेभ्यः प्राच्यपाश्चात्यसाहित्य-दर्शन-शिक्षाशास्त्रसिद्धान्तप्रवीणेभ्यः राष्ट्रिय-संस्कृत-संस्थानस्य मान्यवरकुलपति-**प्रो. वेम्पटिकुटुम्बशास्त्रि**महोदयेभ्यः प्रणतिततिं विनिवेदयामि ।

महत्या श्रद्धया पाण्डुलिपिमधीत्य भूमिकालेखनेन प्रोत्साहनं कृतवतां विद्द्धौरेयाणां श्रीजगन्नाथसंस्कृतविश्वविद्यालयस्य कुलपतिपादानां **प्रो. अलेखचन्द्रषडङ्गि**महोदयानां निकटे कृतज्ञोऽस्मि ।

मार्गदर्शकेभ्यः अस्मद्गुरुपादेभ्यः राष्ट्रियसंस्कृतसंस्थान(मानित-विश्वविद्यालयः)श्रीसदाशिवपरिसरप्राचार्येभ्यः **डॉ.विन्ध्येश्वर प्रसाद हिमांशु**महोदयेभ्यः ग्रन्थस्यास्याभिवृद्धये प्रणामाञ्जलिभिः कार्तज्ञं विज्ञापयामि ।

अस्य ग्रन्थस्य संपादनाय मम प्रेरणाप्रदातृभ्यः तिरुपतिराष्ट्रियसंस्कृत-विश्वविद्यालयस्य कुलपति**प्रो.हरेकृष्णशतपथि**महोदयेभ्यस्तथा विशिष्टसंस्कृतविद्वद्भ्यः प्रो.डॉ. केशवचन्द्रदाश-प्रो.डॉ. ब्रजकिशोरस्वाइँ, प्रो.डॉ. गोपालकृष्णदाश-प्रो. डॉ. सन्निधानं सुदर्शनशर्मा - डॉ. प्रमोदचन्द्रमिश्र-डॉ. सीमाचलपण्डा-डॉ. सदानन्ददीक्षित-डॉ. हरेकृष्णमहापात्र -डॉ.सूर्यमणिरथ-डॉ.सुकान्तकुमारसेनापति- श्रीदुशासन ओझा-डॉ.सरेन्द्रकुमारमिश्र-पण्डितगदाधरदाशप्रमुखेभ्यः श्रीसदाशिवपरिसरस्य गुरुवर्येभ्यश्च साधुवादान् समर्पयामि । ग्रन्थसंपादनार्थमावश्यकतथ्यप्रदानेन महदुपकारं कृतवद्भ्यः डॉ. कम्भम्पाटिसाम्बशिबमूर्त्ति-डॉ.श्रीगोविन्दपाण्डेय-डॉ. मेधाकुमारी-डॉ.पवनकुमारप्रभृतिभ्यश्च धन्यवादान् विनिवेदयामि । अस्मिन् कर्मणि सर्वथा सम्प्रेरकस्य छात्रोत्तरमस्य अध्यापक- **डा.दिल्लीपकुमारनन्दस्य** कृते पाण्डुलिपि-प्रस्तुतिकरणाय साधुवादान् समर्पयामि । किं च छात्रसमाजस्य पुरतः पुस्तकाकारेण प्रकाशनाय पाण्डुलिपेः संशोधनादिकर्मणि सहायतां च कृतवद्भ्यः सहकर्मिभ्यः अवसरेऽस्मिन् कृतज्ञताः विनिवेदयामि। शुद्धमुद्रणार्थं श्रीनीलाद्रिमुद्रणालयाधिकारी धन्यवादार्हः ।

ग्रन्थलेखनाय सततं प्रेरणाप्रदायिनी टङ्कणकर्मणि च साहाय्यकारिणी अर्द्धाङ्गिनी मे **श्रीमती सौदामिनी** अवसरेऽस्मिन् अवश्यं प्रशंसामर्हति । अन्ते च "आपरितोषात् न साधु मन्ये प्रयोगविज्ञानम्" इति कालिदासीयवचनं संस्मरन् विरमामि विस्तरात् । इति शम् ।

विदुषां वशंवदः

सत्यनारायण आचार्यः

**(डॉ. सत्यनारायण आचार्यः)**

SHRI JAGANNATH SANSKRIT VISHVAVIDYALAYA

Professor A.C. Sarangi
VICE-CHANCELLOR

Shri Jagannath Sanskrit Vishvavidyalaya
Shrivihar, Puri-752 003 (Orissa)



Ph : (06752) 251663 (Off)
251640 (Res)
Fax : (06752) 251073 (Off)

# भूमिका

अद्यावधि विश्वभाषायाः संस्कृतभाषायाः गवेषणाविधिः भाषासाहित्यक्षेत्रे सुप्राचीनः । यदा आधुनिकयन्त्रविज्ञानस्याविष्कारः सञ्जातस्तदा अवलुप्तप्रायाणां प्राचीनग्रन्थानां समुद्धरणाय प्रयासः प्राचलत्। हस्तलिखिततालपत्रग्रन्थानां क्वचित् शिलालेखानां ताम्रशासनानां च संग्रहणेन प्राचीनसंस्कृतशास्त्राणां पाठोद्धारः कृतो दृश्यते । तत्र ग्रन्थलेखकानां लिपिकाराणां वा असावधानतावशतः कालकवलेन कीटदंष्ट्रत्वात् च तत्तद्ग्रन्थेषु समुपलब्धाः पाठभेदाः पाठकमनसि संशयमसृजन् । एतदर्थं मूलग्रन्थस्य मूलपाठनिर्णयाय शोधकार्यस्यावश्यकताऽनुभूता । किञ्च कालक्रमेण लोकव्यवहारतः दूरंगतायाः संस्कृतभाषायाः ज्ञानविज्ञानं सर्वजनबोध्यं नाभवत् इत्यतः भाषान्तरेषु तत्प्रकाशनमपि नितरामपेक्षितमासीत् । अतः संस्कृतभाषायाः शोधकार्यमुद्देशद्वयमुररीकृत्य प्रारब्धम् । कुत्रचित् जीर्णग्रन्थानां संग्रहणे तत्परः शोधकर्त्ता संपरीक्ष्य शुद्धपाठं प्रस्तूय शोधप्रबन्धं समुपस्थापयति चेत्, अपरत्र संस्कृतग्रन्थानां दुर्बोध्यं तथ्यं भाषान्तरेषु अनूद्य शोधप्रबन्धरचनायां तत्परः दृश्यते । संस्कृतभाषायाः विकासकाले शास्त्रान्तराणां तुलनात्मकमध्ययनमपि शोधक्षेत्रे किञ्चित् नूतनत्वं प्रत्यपादयत् । इदानीं तु संस्कृतभाषासाहित्यस्य समीक्षात्मकमध्ययनमाधारीकृत्य नैके शोधप्रबन्धाः प्रस्तूयन्ते । परन्तु

दुःखस्य विषयोऽयं यत् संग्रहालयेषु ग्रामीणक्षेत्रेषु च तत्र तत्र अनेके बहुदुर्लभग्रन्थाः जराजीर्णतां प्राप्नुवन्ति । तेषां ग्रन्थानां संरक्षणे यद्यपि केचन तत्पराः दृश्यन्ते, तथापि तत्र विद्यमानं पाठं समुद्धृत्य लोकलोचनगोचरीकरणाय सामर्थ्यं समर्ज्जनीयं संस्कृतविद्यार्थिभिः ।

संप्रति विश्वविद्यालयस्तरे संस्कृतभाषायां शोधकार्यविषये सुमहान् अवसरः प्राप्तः । विशिष्टाचार्य ( *M. Phil.* ) - उपाध्यर्थं विद्यावारिधि - ( *Ph. D.* ) - उपाध्यर्थं वा विद्यार्थिनः प्रेरिताः भवन्ति । परन्तु संस्कृतभाषायां शोधप्रविधिविषयकं ग्रन्थविशेषमप्राप्य विद्यार्थिनः भाषान्तरेषु विरचितानि ग्रन्थान्तराणि अनुसरन्ति । तत्रापि संस्कृतभाषायां पारिभाषिकशब्दानां प्रयोगे ते सर्वथा क्लेशं प्राप्नुवन्ति । अतः संस्कृतविद्यार्थिनां महते उपकाराय ग्रन्थेऽस्मिन् प्रयासः विहितः । विशेषतः शोधप्रविधेः स्वरूपम्, परिसरः , लक्ष्यम्, प्रकाराः, मातृकाप्रस्तुतिः, सन्दर्भप्रस्तुतिः, संशोधनविधिः, प्रकल्पसंरचनम्, सर्वेक्षणम्, समीक्षणप्रक्रिया, संपादनविधिः, अनुवादकला, शोधकर्त्तुः कर्त्तव्यबोधश्चेत्यादिविषयाः सरलया संस्कृतभाषया अत्र वर्णिताः सन्ति । संस्कृतभाषायाः व्यापकप्रचारयुगेऽस्मिन् शोधकार्यं कर्त्तुं समुत्साहवतां कृते पुस्तकमिदं किञ्चित् प्रेरणाप्रदायकं भवति चेत् लेखकस्य श्रमः सर्वथा सार्थकः स्यात् ।

अलेखचन्द्रषडङ्गी

तार : संस्थान
प्रो० वेम्पटि कुटुम्ब शास्त्री
कुलपति
राष्ट्रिय संस्कृत संस्थान
(मानव संसाधन विकास मंत्रालय, शिक्षा विभाग
भारत सरकार के तत्त्वाधान में संचालित)
56-57, इन्स्टीट्यूशनल एरिया, जनकपुरी,
नई दिल्ली-110058



Gram : SAMSTHAN
Prof. V. Kutumba Sastry
Vice-Chancellor
RASHTRIYA SANSKRIT SANSTHAN
(Deemed University)
(under M/o Human Resource Development
Deptt. of Education, Govt. of India)
56-57, Institutional Area, Janakpuri
New Delhi-110058

पत्रसंख्या...RSKS/VC-3/05-06/275 दिनाङ्कः. 25-10-05

# शुभाशंसा

सुरभारत्याः सर्वतोमुखिविकासाय तच्छास्त्राणां परिरक्षणाय चास्मद्राष्ट्रे तत्र तत्र विश्वविद्यालयस्तरे शास्त्राणि निरन्तरमध्याप्यन्ते । एतदवसरे संस्कृतभाषासाहित्यक्षेत्रे नवप्रतिभावतोऽनुसन्धित्सून् जिज्ञासून् चोद्दिश्यास्मदन्तेवासी पुरीस्थश्रीसदाशिवपरिसरे साहित्यविभागे कार्यं कुर्वाण आयुष्मान् डॉ. सत्यनारायण आचार्यः '**संस्कृतशोधप्रविधिः**' नाम पुस्तकं व्यरचयत् । सरलसंस्कृतभाषया रचितं पुस्तकमिदं विलोक्य नितरां प्रसीदति मे मनः । सारस्वतसेवारतेन तेन डॉ. आचार्येण महता श्रमेण समयोचितमनुसन्धानतत्त्वं समाकलय्य पुस्तकेऽस्मिन् सन्निविष्टम् । आधुनिकप्रविधिशास्त्रे श्रद्धावतामनुसन्धानतत्पराणां छात्राणां कृते पुस्तकमिदं महते उपकाराय भवतीति मदीयो विश्वासोऽस्ति ।

श्रीनीलाद्रीशः जगत्पतिः श्रीजगन्नाथ आयुष्मतः लेखकस्य इतोऽपि सारस्वतीं प्रतिभां सरसां विधातुमपेक्षितमायुरारोग्यादिकं च प्रदाय सततं शं तनोतु इति कामये ।

( प्रो. वेम्पटि कुटुम्ब शास्त्री )

तार : विद्यापीठम्
दूरभाष (कार्यालय) : २२३४३१(०६७५२)
(निवास) : २५१७५३ (०६७५२)



Gram : Vidyapithm
Phone -(Office): 223439 (06752)
(Res.): 251753 (06752)

मानव संसाधन विकास मंत्रालय, भारत सरकार के अधीन
**राष्ट्रिय संस्कृत संस्थान**
मानितविश्वविद्यालय, श्री सदाशिव परिसर
पुरी -७५२००१ (उड़िशा)

Under Ministry of Human Resources Development, Govt of India
**Rashtriya Sanskrit Sansthan**
Deemed University, Shree Sadashiva Campus
Puri-752001 (Orissa)

## शुभाशीः

महतो मोदस्य विषयोऽयं यत् सुभारतीसेवाभिरतः मदन्तेवासी आयुष्मान् डॉ. सत्यनारायण आचार्यः श्रीसदाशिवपरिसरस्य साहित्याचार्यः गवेषणापद्धतिं परिशील्य **संस्कृतशोधप्रविधिः** इत्याख्यं ग्रन्थरत्नं विरचितवान् । अनया रचनया संस्कृतशोधविद्यार्थिनां कल्याणाय कामपि अभिनवां शोधसरणीं प्रदर्शयितुमुत्सहतेऽसौ सरलसंस्कृतगद्यगिरा ।

'कर्मण्येवाधिकारस्ते' इति भगवद्वचः स्मारं स्मारमनेन महता परिश्रमेण यदलेखि, तत् लेखकस्य ग्रन्थसंपादनज्ञानकौशलं सूचयत् छात्राणामत्यर्थं तोषाय उपकाराय च स्यादिति मे विश्वासः ।

वर्द्धतां सत्यनारायणस्य रचनाप्रतिभा, प्रसरेत् च कीर्त्तिकौमुदी दिशि दिशि इति श्रीजगन्नाथस्य सविधे प्रार्थना इत्योम् ।

विन्ध्येश्वर प्रसाद हिमांशुः
(डॉ. विन्ध्येश्वरप्रसाद हिमांशुः)
प्राचार्यः

# पुनर्मुद्रणविषये

श्रीनीलाचलनिवासिनः महाप्रभोः श्रीजगन्नाथस्यानुग्रहेण सरलसंस्कृतभाषया निबद्धोऽयं ग्रन्थः प्रथमतः 2005 संवत्सरे पुरीनगरे मुद्रित आसीत् । तदानीं शोधच्छात्राणामत्यावश्यकतया 500 प्रतयः अचिरात् समाप्ताः । ततः भगवतः श्रीवेङ्कटाचलपतेरनुकम्पया 2007 संवत्सरे तिरुपतिराष्ट्रियसंस्कृतविद्यापीठस्य साहित्यविभागे उपाचार्यपदे नियुक्तिं प्राप्तवान् । तदाऽऽरभ्य सर्वदा सर्वे ग्रन्थस्यास्य पुनर्मुद्रणार्थं यद्यपि मां सततं प्रवर्तयन्ति, तथापि समयाभावात् सर्वथा कार्यमिदं साधयितुं समर्थः नाभवम् । अतः छात्राः ग्रन्थस्यास्य प्रतिलिपिं (Xerox) कृत्वा स्वकार्यं सम्पादयन्तु इति तान् अहं संप्रेरितवान् । शैक्षिकवर्षेऽस्मिन् राष्ट्रस्य विविधप्रान्तेभ्यः गवेषकाणां विदुषां च दूरवाणीवार्त्ताः संप्राप्य यथावत् पुनर्मुद्रणाय मया प्रयत्नः विहितः। अतः सर्वेभ्यः मम सम्प्रेरकेभ्यः पाठकेभ्यः कृतज्ञताः विज्ञापयामि । अचिरात् ग्रन्थस्यास्य नूतनं संस्करणमपि यथोचितसंशोधनपुरस्सरं श्रीमतां हस्तगतं भवितेति सविनयं विनिवेदयामि । अस्मिन्नवसरे एतत्कार्यसम्पादनाय डा. ज्ञानरञ्जन-डा.सोमनाथ-श्रीतपन-श्रीसुधाकररेड्डिप्रमुखेभ्यः साधुवादान् समर्पयामि।

श्रावणपूर्णिमा — इत्थम्

संस्कृतदिवसः — विदुषामनुचरः

ता- २-८-२०१२ — सत्यनारायण आचार्यः

# विषयसूची

# प्रथमपरिच्छेदः

**शोधसंज्ञा** **(Defination of Reasearch)** - अद्यत्वे संगणकयुगेऽस्मिन् समाजस्य प्रत्येकमपि क्षेत्रं शोधमूलकं प्रतिभाति। अद्यतनमानवः प्रगतिपथे तावता वेगेन अग्रेसरति, यः खलु युक्तिं विना किमपि तथ्यं प्रामाणिकत्वेन नाङ्गीकुरुते। अतः सर्वत्र ज्ञानविज्ञानस्य नूतनं तथ्यमाविष्कर्त्तुं तत्परः मनुष्यः शोधमाश्रयते। भाषासाहित्यक्षेत्रे शोधस्य संज्ञानिरूपणं विद्वद्भिः बहुधा कृतमस्ति । वैदिककालादेव ज्ञानस्य अन्वेषणेन मानवः सत्यं तथ्यम् आविष्कर्त्तुं प्रयतते । तदुक्तम् ईश्यावास्योपनिषदि -

"हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ।।" इति

(ईशा. मन्त्रः - १५)

अतः अनुसन्धाता तदेव अज्ञानाच्छादितं तत्त्वम् उन्मोच्य जगति ज्ञानालोकं प्रकाशयति । एतस्य ज्ञानतत्त्वस्य युगानुरूपं मूल्यायनं नाम शोधकार्यमिति निरूपयन्ति तद्विदः । तथाहि -

J. Francis Rammel महोदयस्य मतानुसारं शोधकार्यं नाम ज्ञानस्याविष्कर णम्, उन्नयनं, पुनः परीक्षणं च । इयं काचित् शैक्षिकी धारा या खलु शताधिकवर्षेभ्यः सततं युगानुकूलमुद्देश्यं परिवर्त्तयन्ती सत्यज्ञानस्य अन्वेषणे प्रवहमानास्ति इति ।

Clifford woody मते तु शोधनाम प्रयत्नपूर्वकम् अन्वेषणम्, अनुसन्धानं परीक्षणं वा येन कस्यचित् सत्यसिद्धान्तस्य उद्भावनं भवति ।

[2]

## अनुसन्धानं किम् ? (What is Reasearch ?)

अनुसन्धानं नाम अनुपलब्धस्य नूतनतथ्यस्य आविष्करणं उपलब्धस्य च सिद्धान्तस्य पुनर्मूल्यायनम्, युगानुकुलं तद्ज्ञानस्य मौलिकताप्रदर्शनं चेति ज्ञातव्यं भवति । आङ्गलभाषायाम् अनुसन्धानशब्दस्य 'Research' इति व्यवहारः । संस्कृतभाषायां रिसर्च शब्दस्य अन्वेषणम्, अनुसन्धानं, गवेषणा, शोधः वा इत्यादिभिः व्यवहारः दृश्यते । एतेषां पदानाम् अपि अर्थगतं स्वारस्यम् अस्ति । तथाहि- अन्वेषणशब्दः अनु-उपसर्गात् 'इष्' धातोः ल्युट्-प्रत्ययेन निष्पन्नः। तत्र 'अन्विष्' इति अस्मात् धातोः निष्पन्नस्य अन्वेषणशब्दस्य बहुविधरूपेण प्रयोगः प्रश्नोपनिषदि, छान्दोग्योपनिषदि, मैत्रायणी-उपनिषदि च प्राप्यते। अभिज्ञानशाकुन्तले, कुमारसम्भवे, उत्तररामचरिते च 'अन्विष्' शब्दस्यार्थः अनुसन्धानार्थे प्रयुक्तः ।

अनु-उपसर्गात् तथा सम्-उपसर्गात् धा- धातोः ल्युट्-प्रत्ययेन अनुसन्धानम् इति पदमपि निष्पद्यते । प्राचीनकालादेव मन्त्रद्रष्टारः ऋषयः ज्ञानस्य अनुसन्धानाय तत्पराः । अतः शब्दोऽयं विशिष्टार्थे प्रयुज्यते ।

'गवेषणा' इति अयं शब्दः वेदे प्रयुक्तः । 'गो'-शब्देन सह 'इष्'- धातुना ल्युट्-प्रत्यययोगेन 'गवेषणं' 'गवेषणा' वा शब्दः प्राप्यते। तत्र 'गो + एषणा' इति व्युत्पत्त्या ज्ञानस्यान्वेषणमित्यर्थः प्राप्यते ।

'शोध'शब्दः 'शुध्'- धातोः 'घञ्'- प्रत्ययेन निष्पन्नः । शुद्धतायां परिमार्जने वा शब्दोऽयं प्रयुज्यते । शोधनार्थे प्रयुक्तस्य शोधशब्दस्य प्रमाणमपि मनुस्मृतौ प्राप्यते । तथाहि-

"मृत्तोयैः शुद्ध्यते शोध्यं नदी वेगेन शुद्ध्यति ।
अद्भिर्गात्राणि शुध्यन्ति मनः सत्येन शुध्यति।।"

-इति मनु. - ५ . १०८/१०९

एतेषां शब्दानां पर्यालोचनया इदं ज्ञायते यत् अन्वेषणपदेन अनुपलब्धस्य उपलब्धिः, अनुसन्धानपदेन उपलब्धस्य परीक्षणं, शोध इति पदेन च यथार्थविवेचनं निर्णयो वा इत्यर्थः लभ्यते । एवञ्च ज्ञातविषयादज्ञाततत्त्वानामाविष्करणम् अनुसन्धानमिति वक्तुं शक्यते ।

**शोधप्रकृतयः (The Characteristics of Research) -**

वैज्ञानिकचिन्तनेन शोधस्य काश्चन विशिष्टाः प्रकृतयः ज्ञायन्ते । इमाः प्रकृतयः शोधकर्तुः कार्यदक्षतां सृजनशीलताम् अन्तर्दृष्टिं तथा कल्पनाशक्तिं च प्रभावयन्ति। शोधस्य मौलिकतां सम्पादयितुं प्रकृतयः वैज्ञानिकप्रवृत्तिं परिपोषयन्ति । शोधकर्त्ता एतासां प्रकृतीनां विश्लेषणेन शोधकार्ये साफल्यमर्जयति । इमाश्च प्रकृतयः अधोनिर्दिष्टरूपेण मुख्यतः विचारयितुं शक्यन्ते ।

**१ - शोधः** मूलतथ्यतः नूतनं ज्ञानमुपस्थापयति । केवलं ज्ञातपूर्वस्य परिचयमात्रमत्र न क्रियते, अपि तु मूलतः प्राप्तस्य तथ्यस्य तदुत्तरं सम्प्राप्तेन तथ्येन सह परिशील्य निर्णयः उपस्थाप्यते ।

**२ - शोधः** भवति निपुणं सुव्यवस्थितं यथार्थपरीक्षणं च । शोधकर्त्ता दक्षतया सम्परीक्ष्य तथ्यं संगृह्णाति । सः प्रयत्नेन योजनाबद्धतया तथ्यं संगृह्य विश्लेषणम् आरभते ।

**३ - शोधः** तर्कसंगतः वस्तुनिष्ठश्च भवति । शोधकर्त्ता स्वानुभवेन तदीयं शोधकार्यं तर्कबुद्ध्या परिशीलयति।

**४ - शोधः** यथाशक्ति संगृहीततथ्यस्य परिसंख्यानात्मकं विवरणम् उपस्थापयति ।

**५ - शोधः** धैर्यस्य अव्यस्ततायाश्च अवलम्बनेन सफलः भवति । शोधकर्त्ता धैर्यपूर्वकं स्वशोधकार्यस्य समुचितं स्वरूपं निरूपयितुं प्रयतेत। शोधकार्ये शीघ्रता न प्रदर्शनीया। शीघ्रतायां सत्याम् अयत्नेन सफलता न स्यात् ।

**६- शोधः** साहसमपेक्षते । गवेषकः तथ्यसंग्रहणे समागतासु समस्यासु भयभीतः न भवेत् । सत्यतथ्यम् आविष्कर्तुं सः निर्भीकः भवेत् । कदाचित् ऐतिहासिकतथ्यस्य आविष्करणे काचित् सामाजिकी समस्या समागच्छेत् इति भयेन यदि भ्रमात्मकं तथ्यं दीयेत, तदा शोधः निरर्थकः स्यात् ।

**७- शोधः** उच्चाकाङ्ख्याम् अभिलक्ष्य सोद्येश्यपूर्णः भवति । कांचित् समस्यामवलम्ब्य प्रारब्धः शोधः समाधानमेवोपस्थापयति ।

**८- शोधः** साधारणनियमानाम् आविष्करणे वैज्ञानिकमुत्सं प्रति प्रभावं विस्तारयति । अतः समस्यायाः समाधाने उपयुक्तः भवति ।

**९-शोधः** तथ्योपस्थापने दृढतां सम्पादयति । शोधार्थी दृढतापूर्वकम् अत्यन्तं दायित्वपूर्णं शोधकार्यं निष्ठया सम्पादयति । तदीयः दृढः आत्मप्रत्ययः तं तत्त्वान्वेषणे प्रेरयति ।

**१०- शोधः** एकः प्रामाणिकः मार्गविशेषः, यः एकस्याः समस्यायाः विलक्षणं समाधानं कर्त्तुं समर्थः ।

**११- शोधः** सयत्नं पञ्जीकृतः विवरणविशेषः । शोधप्रबन्धे शोधकर्त्ता प्रत्येकमपि पदं सयत्नं प्रतिपादयति, प्रत्येकस्याः धारायाः विश्लेषणं करोति, प्रत्येकमपि पत्रं सज्जीकरोति, प्रत्येकस्य वस्तुनः सत्यभूतं तथ्यं पञ्जीकरोति च । शोधप्रविधीनां प्रयोगेण संगृहीतं तथ्यं मानवोपकाराय प्रस्तूय शोधकार्यं सफलीकरोति ।

**१२ - शोधः** सर्वथा उद्येश्यपूर्णः नूतनतथ्योपस्थापकश्च भवेत् ।

- तत्र नूतनतथ्योपस्थापने अपेक्षिततत्त्वानां सम्यक् संग्रहणं स्यात्।
- संगृहीततथ्यानां विषयविभाजनपुरःसरं विश्लेषणं भवेत् ।
- समालोचनादृष्ट्या शोधप्रबन्धे सत्यानुसन्धानं करणीयम् ।

शोधः वैज्ञानिकप्रवृत्तिसम्बलितः सफलतायाः शीर्ष-सोपानमवतरति। सर्वथा असीमधैर्यवान् शोधकर्त्ता सततं चेष्टया दृढनिष्ठया च स्वकार्यदक्षताबलेन शोधं सार्थकतां प्रापयति ।

**शोधपरिसरः (Scope of Research)** - तत्र " सत्यं ज्ञानम् अनन्तम् ब्रह्म " इति श्रुत्या परिदृश्यमाने जगति ज्ञानस्य परिसरः व्यापकः । यदि शोधकर्त्ता स्वशोधकार्यस्य निर्दिष्टं परिसरं प्रति सावधानः न भवेत् तर्हि शोधकार्यं निर्दिष्टलक्षविहीनं सत् सफलं न भवति । तस्मात् शोधस्य कश्चित् परिसरः शोधार्थिना निर्णेतव्यः । विषयेऽस्मिन् रामचन्द्रन्महोदयः निर्दिशति यत् शोधक्षेत्रं सर्वथा आवश्यकतानुसारं सीमितं भवेत् । शोधकर्त्ता सुविस्तृतं क्षेत्रं स्वीकृत्य शोधमारभते चेत् शोधसन्दर्भस्य मौलिकता न तिष्ठति । अतः समुचितं क्षुद्रतरं च क्षेत्रमवलम्ब्य शोधकार्यं सम्पादनीयम्, येन शोधकर्त्तुः चिन्तनं शोधसन्दर्भस्य मौलिकतां संरक्षेत्। तस्मात् -

१ - शोधपरिसरः विषयानुगुणः निर्द्धारितः सीमितश्च भवेत् ।

२ - शोधस्य समालोचनापरिसरः स्पष्टः स्यात् ।

३ - शोधपरिसरः प्रसङ्गानुकूलः भवेत् ।

४ - शोधसन्दर्भस्य मुख्यं लक्ष्यं प्रति परिसरः उद्दिष्टः स्यात्।

संस्कृतशोधकार्यस्य परिसरः स्तरद्वये वर्त्तते । प्रथमस्तरे अप्रकाशित-प्रकाशितानां वा पाण्डुलिपीनां सम्पादनं, द्वितीयस्तरे प्रकाशितानां पाण्डुलिपीनां सांस्कृतिकमध्ययनं वा आधारीकृत्य भवति।

**शोधप्रकाराः ( Types of Research )** - अद्यावधि भाषासाहित्यक्षेत्रे ये शोधनिबन्धाः प्रस्तूयन्ते, तेषां पर्यालोचनेन त्रिविधता दृश्यते । ते च यथा-

१ - मौलिकः शोधः **( Basic or Fundamental Research )**

२ - व्यावहारिकः शोधः **( Applied Research )**

३ - क्रियात्मकः शोधः **( Action Research )** इति ।

प्राचीनशास्त्रीयसिद्धान्तमाधारीकृत्य गवेषणाद्वारा यत् प्रामाणिकं तथ्यं लभ्यते, तत्तु सर्वथा मौलिकं भवति, तत्र दैनन्दिनजीवनपद्धतेः समस्यायाः वा सम्पर्कः न वर्तत्ते । वैज्ञानिकपद्धत्या कृतोऽयं शोधः कैश्चित् शुद्धशोधरूपेण अभिधीयते । शोधकार्येऽस्मिन् मौलिकता सर्वथा संरक्षिता भवति । अत्र मौलिकसमस्यानां समाधानस्य पन्था उद्भावितः। विज्ञानक्षेत्रे मौलिकशोधस्य अधिकः प्रयोगः भवति।

व्यावहारिकः प्रयोगात्मकशोधः वा प्रकृतक्षेत्रं निर्वहति । अतः आङ्ग्लभाषया इयं **Field Research** इति कथ्यते । विज्ञानागारे प्रयोगशालायां वा अस्याः उपयोगः । इदानीन्तनयुगे वैज्ञानिकप्रगतये अस्याः व्यावहारिकगवेषणायाः महत् योगदानं विद्यते । शिक्षाक्षेत्रे मनोविज्ञानेऽपि अस्याः प्रयोगः भवितुमर्हति । संप्रति भाषाविज्ञानक्षेत्रे अस्याः प्रयोगः परिदृश्यते । विविधभाषासु वर्णानाम् उच्चारणशैल्यां नूतनशब्दसंग्रहणविधौ च भाषाविदः अस्याः उपयोगं कुर्वन्ति ।

क्रियात्मकः शोधः व्यावहारिकशोध इव अस्ति । अयं तु अधिकतया प्रारम्भिकस्तरे क्षेत्रमेवावलम्बते । तात्कालिकीं समस्यां

समाधातुं तत्कालमेव समुपलब्धेषु तथ्येषु यः शोधः विधीयते, सः क्रियात्मकशोध इति कथ्यते । शिक्षाक्षेत्रे शिक्षकस्य शिक्षादाने गुणवत्तामाकलयितुं प्रशासकस्य च प्राशासनिकीं दक्षतां निर्णेतुं शोधोस्यास्य आवश्यकता अस्ति । अनेन प्रत्येकं वास्तवक्षेत्रे सुशृङ्खलिततया वस्तुनिष्ठतया वैज्ञानिकतया च संगृहीतं तथ्यं समुपस्थाप्यते ।

एतदतिरिक्ततया केचन गवेषकाः कालदृष्ट्याऽपि शोधस्य विभाजनं कुर्वन्ति । तेषां मते-

१ - ऐतिहासिकशोधः ( **Historical Research** )

२ - व्याख्यात्मकशोधः ( **Descriptive Research** )

३ - व्यावहारिकशोधश्च ( **Applied Research** ) इति ।

**१ - ऐतिहासिकशोधः** - राष्ट्रस्य अतीतां घटनामाश्रित्य अथवा साहित्यं, संस्कृतिम्, इतिहासं प्रत्नतत्त्वं शासननीतिं च ज्ञातुं नूतनतया तदुपरि यः शोधः विधीयते स ऐतिहासिकशोध इति कथ्यते । ऐतिहासिकसमस्यानां समाधानाय वैज्ञानिकपद्धत्या कृतमनुसन्धानम् ऐतिहासिकशोधनाम्ना ज्ञायते। अत्र शोधकर्त्ता महता यत्नेन ऐतिहासिकशोधं संपादयति । ऐतिहासिकशोधः मुख्यतः त्रिविधमार्गमनुसरति। यथा -

(क)-प्रयोगात्मकः इतिहासः-यः खलु ऐतिहासिकीं घटनामाश्रित्य प्रवर्त्तते।

(ख)-ऐतिहासिकः विषयः - महापुरुषाणां नामानि, उत्तमस्थानानां चित्राणि, उत्तमभावनानां च परिकल्पनाः अत्र अन्तर्भवन्ति ।

(ग)-ऐतिहासिकं तन्त्रम् - पञ्जीकृतम् ऐतिहासिकविवरणम् अवलम्ब्य अथवा तादृशं लिखितं प्रमाणमाश्रित्य प्रवर्त्तते ।

ऐतिहासिकशोधस्य प्रविधयः अपि अनेके भवन्ति । यथा-

क - इतिहासगतः (**Historical**)

ख - न्यायसंगतः (**Legal**)

ग - प्रामाणिकतथ्यभित्तिकः (**Documentary**)

घ - ग्रन्थसूचीसम्बन्धितः (**Bibliographical**)

ङ - आत्मजीवनीसम्बन्धितः (**Biographical**)

च - संस्थागतः (**Institutional**)

छ - संघटनगतश्च (**Organisational**) इत्यादयः भवन्ति ।

ऐतिहासिकशोधस्य उद्देश्यं व्यापकमस्ति । शिक्षाक्षेत्रे अस्य विचारः निम्नलिखितया रीत्या कर्त्तुं शक्यते-

**I-** अतीतवर्त्तमानयोः वास्तविकं चित्रं शोधेनानेन समुपस्थाप्यते। अतः वर्त्तमानस्य समस्यामूले अतीतं परिशील्य समाधानं सहजं भवति।

**II-** सामाजिकप्रगतौ संस्कृतेः ऐतिह्यज्ञानं परमावश्यकमस्ति । प्राचीनसंस्कृतेः ज्ञानेन समाजसंस्कारः सहजसाध्यः भवति ।

**III-** अनेन शोधेन अतीतस्य समुचितं समाकलनं सम्भवति, येन भविष्यतः सुनियन्त्रणं सुलभं भवति ।

**IV-** अतीतानुभूतीनां विश्लेषणेनमूल्यायनेन वा भविष्यत्कार्यपन्था-निर्धारणं सुकरं संजायते।

**V-** अतीतस्य दोषान् प्रति सावधानता अवलम्ब्य जीवनं शृङ्खलितं भवत्ति ।

**VI-** सामाजिकव्यवस्थायाः युगानुकूलं परिवर्त्तनज्ञानं प्रगतिपथमवतारयति।

**VII** - विशेषतः शिक्षकाणां कृते शिक्षाविभागीयप्रशासकानां च कृते वृत्तिगतप्रशिक्षणस्य अत्यावश्यकवस्तुत्वेन ऐतिहासिकशोधोऽयं स्वीक्रियते।

VIII-संस्कृतभाषासाहित्यस्य युगानुसारं प्रगतिं संसाधयितुम् ऐतिहासिकशोधः नितरामपेक्षते । अन्यथा समाजे काचित् प्राचीनभाषारूपेण विज्ञानयुगे अनपेक्षितवस्तुरूपेण वा संस्कृतमवहेलितं स्यात् ।

२-व्याख्यात्मकशोधः-

समस्यायाः मूलं ज्ञात्वा तस्य सरलसमाधानाय व्याख्यात्मकः शोधः प्रस्तूयते । केषांचन मते अयं विश्लेषणात्मकः भवति । अत्र केवलं तथ्यानां संग्रहणं संकलनं वा न भवति, अपितु तदीयं विश्लेषणं विधाय मूल्यायनं क्रियते । संस्कृतभाषासाहित्यस्य भाषाविज्ञानस्य वा गवेषणाक्षेत्रे अस्य महत्वपूर्णा भूमिका वर्त्तते । संस्कृतशास्त्राणां सुरक्षार्थं व्याख्यात्मकशोधः नितराम् उपयोगी ।

३- व्यावहारिकशोधः -

यद्यपि प्रयोगशालायामेव शोधोऽयं विधीयते,तथापि इदानीन्तनयुगे भाषासाहित्यस्यापि प्रयोगशाला भाषाविद्भिः निर्मिता इत्यतः अस्यापि प्रयोगः युगानुकूलः समयानुकूलश्च अस्ति । सम्प्रति अनायासेन अल्पव्ययेन वा भाषाधिगमः सर्वैः अभिलष्यते । तस्मात् भाषायाः सरलप्रयोगनिमित्तं भाषाविदः प्रयतन्ते । एवमेव व्यावहारिकशोधद्वारा संप्रति व्याकरणभूयिष्ठा क्लिष्टा च संस्कृतभाषा लोके दशदिवसैरेव व्यवहारयोग्या दृश्यते । ध्वनिविज्ञानस्य अध्ययनेन स्पष्टमन्त्रोच्चारणजनितं वर्णोच्चारणजनितं वा पुण्यमर्जयन् मनुष्यः स्वजीवनं धन्यं मनुते। एतत्सर्वं हि व्यावहारिकशोधस्य फलमस्ति । अनेनैव शोधकार्येण भाषाविज्ञानस्य विकाशत्वात् विश्वे संस्कृतभाषा विश्वभाषेति वन्द्यते अभिनन्द्यते च ।

इदानीं गवेषकाः शोधप्रकाराणां विविधतां विचारयन्ति। समीक्षकाणां मतानुसारं बहुविधाः शोधाः भवितुमर्हन्ति । तथाहि-

१-तुलनात्मकः (Comparative)

२-समालोचनात्मकः (Critical)

३-संपादनात्मकः (Editing)

४-तथ्यानुसंधानात्मकः (Experimental)

५-वस्तुभित्तिकः (Objective)

६-पर्यवेक्षणात्मकश्च (Survey) इति ।

**१-तुलनात्मकः-**

संस्कृतभाषासाहित्यक्षेत्रे इदानीं तुलनात्मक-मध्ययनमाधारीकृत्य अनेके शोधप्रबन्धाः प्रस्तुताः सन्ति । प्रथमं तु १९११ ख्रीष्टाब्दे फ्लोटेनस्विश्वविद्यालये एल्.पि.तेस्सितोरीमहोदयः रामचरित-मानसेन सह रामायणस्य तुलनात्मकमध्ययनम् इति विषये शोधप्रबन्धमुपस्थापितवान् इति[१] ज्ञायते । इदानीं तु मूलसंस्कृतकाव्य-नाटकादिभिः सह बहूनां प्रान्तीयभाषासाहित्यसम्बलितानां काव्यनाटकादीनां तुलनात्मकमध्ययनं तत्र तत्र विश्वविद्यालयेषु विधीयते।

तुलनात्मकाध्ययनेन उभयोः साहित्ययोः महत्त्वं प्रख्यापितं भवति। तुलनात्मकशोधप्रबन्धप्रस्तुतावसरे शोधकर्त्ता सर्वथा यत्नवान् भवेत् यत् तुलनीययोः साहित्ययोः आधारः समानः भवेत्, तुलनीयक्षेत्रस्य परिसरः स्पष्टः स्यात्, विश्लेषणपद्धत्या तुलना प्रतिस्तरं विहिता स्यात्, सूक्ष्मेक्षिकया तुलना समानपरिसरविशिष्टस्य क्षेत्रस्य मध्ये भवेदिति च ।

---

१. शर्मा विनयमोहन / शोधप्रविधि, पृ. सं. २१,२२

**२-समालोचनात्मकः** - संस्कृतशास्त्रपरंपरायां समालोचनात्मकम् अध्ययनम् आवहमानकालतः प्रचलति । उदाहरणतः काव्यशास्त्रस्य इतिहाससमीक्षया ज्ञायते यत् विशेषतः ध्वनिसिद्धान्तात् परम् अभिनवगुप्त-मम्मट-विश्वनाथ-विद्यानाथ-विद्याधर-पण्डितराजजगन्नाथप्रभृतयः आलंकारिकाः काव्यतत्त्वमाश्रित्य समालोचनात्मकं विचारं स्वस्वग्रन्थेषु कृतवन्तः । भरतमुनिप्रणीतनाट्यशास्त्रग्रन्थस्य "विभावानुभावव्यभिचारि-संयोगात् रसनिष्पत्तिः" इति रससूत्रस्य समीक्षा समालोचनात्मकमध्ययनं वा भट्टलोल्लट-श्रीशंकुक-भट्टनायक-अभिनवगुप्तपादैः स्वस्व-प्रतिभानुसारं विहितम् ।

अतः शोधप्रबन्धप्रस्तुत्यवसरे समालोचनात्मकमध्ययनं किमपि नूतनत्वम् उद्भावयति । कारणं तत्र तथ्यानां पुनः पुनः निरीक्षणेन सह सावधानतया विश्लेषणं क्रियते । अनेन शोधसन्दर्भस्य मौलिकता सारवत्ता च संसिद्ध्यति ।

**३-संपादनात्मकः**- लुप्तप्रायस्य संस्कृतवाङ्मयस्य पुनर्जीवनाय संपादनात्मकः शोधः संप्रति अत्यावश्यकः । संपादनात्मकः शोधः यद्यपि नवीनतां न सृजति तथापि मौलिकतां न हन्ति । पूर्वलिखितस्य जराजीर्णस्य कीटदंष्ट्रस्य वा अंशस्य संशोधनेन शुद्धपाठप्रदर्शनपुरःसरं मूलपाठनिर्णयात्मकः शोधः अत्रान्तर्भवति । विविधयुक्तिभिः समालोचनात्मकः लघुप्रबन्धः प्रामाणिकत्वेन स्वीक्रियते । अनेन शोधकार्येण शोधप्रबन्धस्य गुरुत्वम् अनुभूयते । किं च प्राक्काले एकस्यैव ग्रन्थस्य अनेकेषु स्थानेषु लिपिकारैः ताडपत्रेषु लिखित्वा संरक्षितमासीत् । यदा प्रकाशनाय अवसरः आयाति, तदा एकाधिकानां मातृकाणां पाठभेदेन शुद्धपाठः अपेक्षते । अतः

सम्पादनात्मकः शोधः नितराम् आवश्यकः। अत्र पाण्डुलिपिगतं मूलतथ्यं संरक्षयन् शोधकर्त्ता लेखकस्य मौलिकं पदसंयोजनं च अपरिवर्त्त्य शुद्धपाठ्यं निर्णयति । सूक्ष्मबुद्ध्या परिशील्य विषयविन्यासः संपादनात्मकशोधस्य मूल उत्सः भवति । अत्र शोधकर्त्तृः संपादकस्य समालोचनात्मकदृष्टिभङ्गी विषयगतपाण्डित्यं च नितरा- मपेक्षते । प्राचीनसंस्कृतग्रन्थानां प्रकाशनं प्रायः संपादनात्मकशोधानुसारं विधीयते ।

**४-तथ्यानुसन्धानात्मकः-** साधारणतः वैज्ञानिकगवेषणायां तथ्यानुसन्धानात्मकः शोधः परिदृश्यते । संगृहीतस्य तथ्यस्य सत्यासत्यं परीक्षितुं प्रयोगशालायां गवेषकः आवश्यकोपकरणैः परीक्ष्यते । तदनु प्रत्यक्षरूपेण अनुसन्धानगतसमस्यायाः तथ्यभित्तिकं समाधानमाधत्ते । संस्कृतशास्त्राणां पर्यालोचनेन तथ्यभित्तिकः शोधप्रबन्धः सम्भवति । किमपि समस्यात्मकं तथ्यं संगृह्य तत् प्रमाणीकर्त्तुं शोधकर्त्ता प्रयोगशाला इव पण्डितानां सहयोगेन विविधकर्मशालामाध्यमेन आलोचनाद्वारा तथ्यभित्तिकं शास्त्रीयसिद्धान्तं निर्णयति । तथ्यानुसन्धानाय विषयविशेषज्ञानां परामर्शानुसारं शोधकर्त्ताप्रामाणिकग्रन्थानां पर्यालोचनेन सफलो भवति । समस्यानुकूलोऽयं शोधः युक्त्या परीक्षापूर्वकं प्रवर्त्तते । फलतः सिद्धान्तपक्षप्रतिपादने शोधः समर्थः भवति ।

**५- वस्तुभित्तिकः -** वस्तुनिष्ठः शोधः प्रायः ग्रन्थभित्तिकः घटनाभित्तिकः वा स्यात् । अनेन निर्दिष्टाचिन्ताधारा सुविस्तृततया परीक्षते । सुनिश्चितां घटनाम् आधारीकृत्य अध्ययनेन विविधपद्धतिभिः सम्पादनं विधीयते।

**६-पर्यवेक्षणात्मकः-** सांप्रतिकीं समस्यां समाधातुं नाम सुनिर्दिष्टम् अभिप्रायं सम्पादयितुं पर्यवेक्षणात्मकः शोधः अपेक्षते । अनेन

विविधसमयानुगतसमस्यानां समानावस्थां प्राप्तानां च समस्यानां समुचितं निर्द्धारणं भवति । फलतः भविष्यत्प्रगतेः सूत्रं प्राप्यते । शोधकर्त्तुः भविष्यत्योजनायाः रूपरेखं चानेन निर्धारयितुं शक्यते । पर्यवेक्षणमपि विविधस्तारानुगुणं भवितुमर्हति । यथा- भाषागतपर्यवेक्षणं, सांस्कृतिकपर्यवेक्षणं, धार्मिकपर्यवेक्षणं, साहित्यिकपर्यवेक्षणं, सामाजिकपर्यवेक्षणम्, आर्थनीतिकपर्यवेक्षणं, राजनीतिक-पर्यवेक्षणञ्चेत्यादि। एतानि सर्वाण्यपि पर्यवेक्षणानि स्वस्वविषयकेन्द्रितानि भवन्ति ।

संस्कृतभाषासाहित्यक्षेत्रे शोधप्रकारनिरूपणे ड.नगेन्द्रप्रभृतिभिः समीक्षकैः विषयविभागः प्रदर्शितः । संस्कृते विविधविषयमाधारीकृत्य स्वतन्त्रः शोधः भवेत् । तत्रापि शास्त्रीयविषयाणां शास्त्रीयविषयकः वर्गः, साहित्यविषयाणां साहित्यिकः विषयकः वर्गश्चेति विषयविभागः। तथाहि- व्याकरण-दर्शन-धर्मशास्त्र-कर्मकाण्ड-ज्योतिर्विद्या-काव्यशास्त्र-सम्बद्धानुसंधानानि शास्त्रीयानुसन्धाने वर्गे अन्तर्भूतिमायान्ति, वैदिकसाहित्याभिजातसाहित्यविषयकानुसन्धाने च साहित्यिका-नुसन्धानान्तर्गते भवतः इति ।

**शोधपद्धतयः-** अनुसन्धानक्षेत्रे बहुपद्धतयः अनुसृताः भवन्ति । शोधकर्त्ता ताः पद्धतीः अनुसृत्य शोधकार्यं सम्पादयति । तथाहि-

१-परम्परागता वैज्ञानिकः पद्धतिः

२-सर्वेक्षणपद्धतिः

३-शास्त्रीयपद्धतिः

४-तुलनात्मिकापद्धतिः

५-समस्यामूलकपद्धतिः

६-क्षेत्रीयाध्ययनपद्धतिः

७-वर्गीयाध्ययनपद्धतिश्चेति ।

एतदतिरिक्ततया विनियुक्ता पद्धतिः, मूल्यनिर्द्धारणात्मिका पद्धतिः, अवस्थाध्यायनात्मिका पद्धतिः, सूत्रबद्धप्रकाश्या पद्धतिः, परिकल्पनात्मिकापद्धतिश्चेत्यादयः दृश्यन्ते ।

**१.परम्परागतावैज्ञानिकी पद्धतिः**-पद्धतिरियं प्रायः अष्टादशशताब्द्यां यूरोपदेशस्य गवेषकैः धार्मिकान्दोलनसन्दर्भे अनुसृता । तत्र समाजस्य सामाजिकम्, आर्थनीतिकं, राजनीतिकम्, ऐतिहासिकं च गवेषणं कर्त्तुं पद्धतिरियं प्रवृत्ता । क्रमशः अनया पद्धत्या काव्यिकं परिशीलनमपि सञ्जातम् । एवं रूपेण क्रमशः राष्ट्रान्तरेषु प्राचीनसाहित्यमूल्यायनाय परम्परागतपद्धतेः व्यवहारः कृतः ।

संस्कृतभाषासाहित्यक्षेत्रे भारतवर्षे पद्धतिरियं बहुप्राचीनकालात् आविष्कृता इति प्रतिभाति । तत्र पाणिनिमुनेः अष्टाध्यायीग्रन्थे रचितानां सूत्राणां मूल्यायनाय परवर्त्तिनि काले कात्यायनस्य पतञ्जलेश्च प्रयासः स्मरणीयः । महाभाष्यग्रन्थे व्याकरणसूत्राणां समस्याः भाषावैज्ञानिकपद्धत्या चर्चिताः सन्ति । संस्कृतभाषायाः प्रायोगिकक्षेत्रे वर्णानाम् उच्चारणे भाषावैज्ञानिकं तथ्यं परिशील्य समीक्षकाः परम्परागतपद्धतिः वैज्ञानिकपद्धतिरिति वदन्ति । परवर्त्तिनि काले मल्लिनाथप्रभृतयः अनेके टीकाकाराः मूलकाव्यग्रन्थानां शास्त्राणां च व्याख्याने परंपरागतपद्धतिमनुश्रुतवन्तः । अनया पद्धत्या मूलग्रन्थकर्त्तुः मौलिकता सुरक्षिता भवति । तत्र परिदृश्यमानम् असामञ्जस्यं सुसृङ्खलितं भवितुमर्हति । संप्रति भाषायाः द्रुतविकासकाले परंपरागतपद्धतेः उपयोगेन शोधः नितरामपेक्षते । अन्यथा संस्कृतभाषासाहित्यं वा विकलतां प्राप्नुयात्।

**२.सवक्षणपद्धतिः** - अनया पद्धत्या कस्यचित् कालखण्डस्य व्यवस्थाविशेषस्य वा क्रमबद्धतया विवरणं समुपस्थापयितुं शक्यते । विशेषतः शिक्षाक्षेत्रे समाजशास्त्रे अर्थशास्त्रे भाषाविज्ञानादिषु वा सर्वेक्षणपद्धत्या तथ्यं संगृह्य वैज्ञानिकरीत्या परीक्ष्यते । इदानीं परिवेशविदः सर्वेक्षणद्वारा तद्गततथ्यं निर्दुष्टमुपस्थापयन्ति । संस्कृसाहित्यक्षेत्रेऽपि कस्यचित् काव्यविशेषस्य समीक्षावसरे सर्वेक्षणं कर्त्तुं शक्यते। यथा - गङ्गवंशानुचरितमहाकाव्यस्य शोधकर्मणि गङ्गवंशीय-राज्यशासनकालस्य सर्वेक्षणं कर्त्तुमर्हति शोधकर्त्ता । तेषां शासनकाले अस्माकं राज्यस्य सांस्कृतिकी स्थितिः, जनानां प्रवृत्तिः, संस्कृतभाषायाः प्रगतिश्च कथमासीदिति निर्णेतुं शक्यते । सर्वेक्षणपद्धतिनिमित्तं शोधकर्त्ता अधिकं यत्नवान् भवेत् । भाषाविज्ञानक्षेत्रे यदि सर्वेक्षणं क्रियते, तदा क्षेत्रकार्यं (Field work) सम्यग् भवेत् । निर्दिष्टक्षेत्रस्य भाषायाः उपरि यदि सर्वेक्षणमपेक्षते, तदा तत्रत्यजनैः सह संपर्कः स्थापनीयः, तस्मिन् स्थाने व्यवहृतायाः भाषायाः श्रवणं करणीयम्, तत्रत्यं साहित्यं संगृह्य परिशीलनीयं च । क्वचित् ध्वनिमुद्रिकायाः साहाय्येन तथ्यसंग्रहणमपि करणीयम् । विविधैः उपायैः तथ्यं संगृह्य क्रमबद्धतया विवरणं प्रस्तूय सिद्धान्तः उपस्थापनीयः भवति ।

**३. शास्त्रीयपद्धतिः** - केचन इमां पद्धतिम् आलोचनात्मिका पद्धतिरिति वदन्ति। अस्यां पद्धतौ शोधकर्त्ता मूलग्रन्थं प्रति अधिकं प्राधान्यं ददाति। मूलग्रन्थकर्त्तुः मौलिकं तथ्यमपरिवर्त्त्य विविध-साहित्यिक-पक्षमुपस्थाप्य तात्त्विकविवेचनं च कृत्वा शोधकर्त्ता कृतेः मूल्यायनं विदधाति । अद्यावधि संस्कृतक्षेत्रे पद्धतिरियमत्यादृता । अस्याः पद्धतेः अध्यनप्रकाराः बहुविधाः भवितुमर्हन्ति । यथा - काव्यशास्त्रमाधारीकृत्य काव्यशास्त्रीयमध्ययनं कर्त्तुं शक्यते ।

काव्यशास्त्राध्ययनप्रसङ्गे शोधकर्त्ता काव्यशास्त्रस्य विविधतत्त्वं यथा - काव्यप्रयोजनम्, काव्यस्वरूपम्, काव्यकारणम्, काव्यभेदः, काव्यात्मभूतं तत्त्वं चेति विषयान् आधरीकृत्य स्वविवेचनं प्रस्तौति । कवेः देशकालादिपरिचयप्रदानपुरःसरं तस्य कवित्वशक्तिः, भाषाशैली इतरकाव्येषु तदीयकृतेः प्रभावश्चेति विषयाः अपि चर्च्चिताः भवेयुः । अत्र परंपरानुसारं शास्त्रानुमोदितं तथ्यमाश्रित्य सिद्धान्तपक्षः उपस्थापनीयः। संप्रति आधुनिककाव्यसमीक्षायां भावपक्षं कलापक्षं चाश्रित्य शोधप्रबन्धं समीक्षकाः समुपस्थापयन्ति । संस्कृतसाहित्यस्य समाज-शास्त्रीयमध्ययनमपि दृश्यते । अत्र सामाजिकी स्थितिः गतिः प्रवृत्तिश्च परिशील्यन्ते । काव्यं कियत्परिमाणेन समाजोपयोगीति विचारः उपस्थाप्यते। लोकव्यवहारज्ञानाय प्रवृत्तस्य काव्यस्य नैतिकः आदर्शबोधः अत्र परीक्ष्यते ।

शास्त्रीयपद्धत्यन्तर्गततत्त्वेन भाषायाः साधुप्रयोगनिमित्तं भाषा-वैज्ञानिकशैली वैज्ञानिकपद्धतिश्च अवलम्ब्येते । वर्णरचनायाः भाषावैज्ञानिकं महत्त्वम् आभ्यां पद्धतिभ्यां निर्मीयते । साहित्यस्य मूल्यायनावसरे शोधकर्त्ता मनोवैज्ञानिकपद्धतिमवलम्ब्य काव्यकर्त्तुः अन्तश्चेतनया तदीयकृतेः अध्ययनं विदधाति । कवेः अन्तर्निहितां भावनां काव्यतः आविष्कर्त्तुमत्र शोधकर्त्ता प्रवर्त्तते ।

**४. तुलनात्मिका पद्धतिः** - अनया पद्धत्या भाषादृष्ट्या समानयोः काव्ययोः समानानां काव्यानां वा तुलना भवितुमर्हति । कदाचित् समकालिकानां कवीनां तत्कृतीनां वा साम्यवैषम्यतत्त्वविवेचनाय पद्धतिरियमाश्रियते । क्वचित् भाषान्तरयोरपि काव्यकृत्योः परिशीलनं कर्त्तुं शक्यते । यथा - कालिदास-सेक्सपियर् - इत्यनयोर्मध्ये तुलना,

मेघदूत-हंसदूतयोः तुलना । साहित्यदर्पण-साहित्यादर्शयोः तुलनाप्रभृतयः भवितुमर्हन्ति । अनेन शोधकर्त्तुः दृष्टिभङ्गी सुविस्तृता भवति ।

**५. समस्यामूलकपद्धतिः -** अत्र शोधकर्त्ता समस्याविशेषस्य समाधानाय प्रयतते । शोधकर्त्तुः लक्ष्यं समस्याकेन्द्रितं भवति । अतः विषयान्तराणां विवेचनं नापेक्षते । निर्दिष्टं सूत्रं काव्यतत्त्वं वा आश्रित्य समस्यामूलकः शोधः सफलतामेति । काव्यप्रसङ्गे **कुमारसम्भवे शैवसिद्धान्तः, भासनाटकचक्रे शृङ्गाररसविचारः, मेघदूते योगशास्त्रसिद्धान्त-**श्चेत्यादयः विषयाः भवितुमर्हन्ति ।

**६. क्षेत्रियाध्ययनपद्धतिः** - एकं क्षेत्रविशेषमाधरीकृत्य साहित्यिकमध्ययनं वा यदा क्रियते तदा क्षेत्रियाध्ययनपद्धतिरिति कथ्यते । उदाहरणं यथा - **उत्कलस्य संस्कृतकथाकाराः, श्रीक्षेत्रस्य संस्कृतनाट्यकाराः, भारतस्य संस्कृतपत्रिकाः.पत्रकाराश्**चेत्यादि। अस्यां पद्धतौ परिवेशविषये, स्थानविशेषे कालविशेषे वा प्रादुर्भूतस्य साहित्यस्य विशेषाध्ययनं विधीयते। कालविशेषस्य यथा - **स्वाधीनोत्तरसंस्कृतकाव्यसमीक्षा** । क्षेत्रियपद्धतिद्वारा शोधः स्ववैलक्षण्येन सार्थकः भवति ।

**७. वर्गीयाध्ययनपद्धतिः -** अस्याः पद्धतेः अनुसारं शोधविषयः कृतिविशेषः, कृतेः कर्त्ताविशेषो वा न भवति । अत्र कृतेः वर्गविशेषः, कर्त्तृणां वा वर्गविशेषः गृह्यते । यद्यपि एकस्य एकस्य कृतिविशेषस्य अथवा तत्कर्त्तुः स्वतन्त्रं वैशिष्ट्यं वर्त्तते, तथापि अनेके कृतिकाराः वर्गरूपेण साहित्यं विरचयन्ति । तेषां सर्वेषां साहित्यसाधनायाः लक्ष्यं समान्यं स्यात् । अतः यद्यपि तेषां व्यक्तित्वं भिन्नं तथापि लक्ष्यं समानमिति कृत्वा वर्गीयमध्ययनमपेक्षते । **संस्कृतव्यङ्ग्यकवीनां**

**समीक्षणम्, ध्वनिवादिनाम् आचार्य्याणां काव्यसिद्धान्तः** इति वा विषयो भवेत् ।

**८. विनियुक्ता पद्धतिः** - मौलिकगवेषणायाः प्रसिद्धां समस्यामूररीकृत्य विनियुक्तापद्धतिः प्रयुज्यते । अत्र निकटतमपरिस्थितेः विवेचना क्रियते।

**९. मूल्यनिर्धारणात्मिका पद्धतिः** - समयानुसारं प्रगति-माकलयितुमस्याः पद्धतेः प्रयोगः भवति । पद्धतिरियं शोधकर्त्तुः कार्यकौशले दक्षतां समाकलयति ।

**१०. अवस्थाऽध्ययनपद्धतिः** - सुनिर्द्दिष्टां घटनामभिलक्ष्य तथ्यानां संग्रहणेन अवस्थानुशीलनद्वारा यः शोधः विधीयते, तत्र अवस्था-ऽध्ययनपद्धतिरिति कथ्यते। तत्र निर्द्दिष्टरूपेण दृश्यमानायाः कृतेः अनुसन्धानं विधीयते । इमां पद्धतिं सफलीकर्त्तुं प्रभागाणां सामग्रिकता, विषयेण सह संपृक्तः समयः, दैनिकविवरणपुस्तिकादि व्यक्तिगतोपादानम्, आत्मजीवनीपुस्तिका च अपेक्षन्ते ।

**११. सूत्रबद्धप्रकाश्या पद्धतिः** - यदा सूत्रात्मकत्वेन अध्ययनमुपस्थाप्यते, तदा सूत्रबद्धप्रकाश्या पद्धतिरिति कथ्यते । रचनात्मकाध्ययनाय नूतनधारायाः आविष्करणाय तथा अन्तर्दृष्टेः परिप्रकाशनाय पद्धतिरियमुद्दिष्टा।

**१२. परिकल्पनात्मिका पद्धतिः** - अनया पद्धत्या अनुसन्धानगत-तथ्यानामवगतिर्जायते । पद्धतिरियमपरां पद्धतिं प्रति परिपूरिका भवति।

**संस्कृतभाषया गवेषणार्थं योग्यता (Qualification for Reaseach in Sanskrit Language)** संप्रति विश्वविद्यालयेषु गवेषणार्थं ये नामपञ्जीकरणं कुर्वन्ति, तेषु बहूनां गवेषकोचिता अपेक्षिताः गुणाः नावलोक्यन्ते । परिणामतः केचन शोधप्रबन्धं प्रस्तौतुं सर्वथा असमर्थाः

भवन्ति । अपरे केचन पण्डितानां साहाय्येन कथमपि कार्यं साधनीयमिति धिया उपाधिप्राप्तये प्रयतन्ते । फलतः गवेषणाक्षेत्रे समुचितज्ञानाभावात् मानमपि अनुदिनं ह्रासतां गच्छति । अतः गवेषकाणां कृते अपेक्षितानां गुणानां चर्च्चा करणीया । विशेषतः संस्कृतगवेषकः निष्ठावान् न भवति चेत् शोधः असंपूर्णः भवति, यतः संस्कृतभाषायाः क्षेत्रमतिव्यापकमस्ति। सकलज्ञानविज्ञानस्य मूलं भवति संस्कृतम् । अतः संस्कृतं प्रति श्रद्धा संस्कृतभाषायां दक्षता च नितरां भवेत् । संस्कृतगवेषकस्य गवेषणाप्रवृत्तिः सुदृढा स्यात् । प्रवृत्तिं विना कस्मिन्नपि कार्ये प्रगतिः न लक्ष्यते । एकस्य गवेषकस्य न्यूनातिन्यूनं निम्नलिखिताः गुणाः भवेयुः । यथा -

१. जिज्ञासा

२.गवेषणार्थं गृहीतविषये ज्ञानम्

३. भाषादक्षता

४. कार्ये अभिरुचिः

५. कृतज्ञता

६. वैज्ञानिकी दृष्टिभङ्गी

७. लेखननैपुण्यं चेति

**१.जिज्ञासा** - श्रीमद्भगवद्गीतायां कथितं यत् - "तद् विद्धि प्रणिपातेन परिप्रश्नेन सेवया..." (श्रीमद्भगवद्गीता.४/३४) इत्यादि। अतः ज्ञानार्ज्जननिमित्तं प्रथमतः शोधकर्त्तुः जिज्ञासाप्रवृत्तिः भवेत् । परंब्रह्मणः विषये ज्ञातुं बादरायणः सूचयति -

"अथातो ब्रह्मजिज्ञासा" इति ।

तस्मात् गवेषकः जिज्ञासाभावं परिपोषयन् कार्ये साफल्यमर्ज्जयति ।

**२. गृहीतविषये ज्ञानम् -** विषयनिर्वाचनसमये गवेषकः स्वबुद्ध्यनुसारं विषयं स्थिरीकुर्यात् । गृहीतविषये ज्ञानं सम्पादनीयम् । गृहीतविषयस्य मौलिकपदार्थानां विषये गवेषकः सामान्यं ज्ञानं सम्पादयेत् । यदि गृहीतविषये कुत्रापि किमपि कार्यं साधितम्, तदा सावधानतया अनालोचितं भागं स्वीकुर्यात् ।

**३. भाषादक्षता -** भाषादक्षतां विना शोधः कदापि सफलः न भवति। विशेषतः संस्कृतभाषाक्षेत्रे शोधकर्त्तुः भाषादक्षता नितरामपेक्षते । कारणं शोधप्रबन्धप्रस्तुतये सुललितभाषायाः उत्तमज्ञानमपेक्षते । संस्कृतभाषायाः सुमधुरप्रयोगकौशलमेव शोधप्रबन्धस्य किमपि आकर्षणं भवति । किञ्च संगृहीतं तथ्यं समुचितभाषया नोपस्थाप्यते चेत् शोधस्योद्देश्यं बाधितं भवति ।

**४. कार्ये अभिरुचिः -** कस्मिन्नपि कर्मणि अभिरुचिं विना सफलता न मिलति । गवेषकः असीमः धैर्यवान् भवेत् । तथ्यसंग्रहणे सिद्धान्तनिरूपणे च विफलतायां सत्यां तस्य कार्ये निरन्तरं संलग्नता स्यात् । निरन्तरतया कार्यकरणेन विस्मरणक्लेशः न जायते । अन्यथा अद्यकृतं कार्यम् एकमासात् परं स्मर्य्यते चेत्, तदा बहुकष्टकरं भवति । तस्मात् एकनिष्ठभावनया निरन्तरतया समस्यानां समाधानोपायचिन्तनपुरस्सरं शोधकर्त्ता कार्ये व्यापृतः भवेत् । कदाचित् शारीरिकक्लेशेन अर्थव्ययेन वा निरुत्साहितः भूत्वा कार्यं न परित्यजेत् । निरन्तरतया कार्यकरणेन नानासमस्यानां स्वतः समाधानं जायते, शोधकार्यं च यथाकालं समाप्तिं गच्छति ।

**५. कृतज्ञता -** समाजे प्रत्येकस्मिन् क्षेत्रे कृतज्ञतागुणः व्यक्तेः महनीयतां प्रख्यापयति । शोधकार्यं सर्वथा शैक्षणिकक्षेत्रे महत्त्वपूर्णं पवित्रं च

कार्यं भवति । अतः गवेषकः तथ्यसंग्रहकाले येषां व्यक्तिविशेषाणाम् अनुष्ठानानां वा सकाशात् उपकृतः भवति, तेभ्यः अवश्यं कृतज्ञतां समर्पयेत् । केचन प्राचीनानां ग्रन्थेभ्यः तथ्यं संगृह्यापि तेषां नामोल्लेखं न कुर्वन्ति, किन्तु एतत् न समीचीनम् । उत्तमः गवेषकः स्वशोधकार्यसंपादनार्थम् उपकृतवद्भ्यः सर्वेभ्यः आन्तरिकीं कृतज्ञतां विज्ञाप्य निजकार्यकुशलतां प्रमाणयति ।

**६. वैज्ञानिकी दृष्टिभङ्गी** - शोधकार्ये गवेषकस्य वैज्ञानिकी दृष्टिभङ्गी प्रामाणिकतथ्योपस्थापनस्य प्रमुखं कारणं भवति । संप्रति विज्ञानयुगे प्रत्येकमपि तथ्यं नानायुक्तिभिः प्रामाणिकं भवेत्, अन्यथा ग्राह्यं न भवति। तस्मात् भाषासाहित्यगवेषणाक्षेत्रेऽपि निरपेक्षतया वैज्ञानिकपद्धत्या तथ्यानुसन्धानं करणीयमेव । कारणं वैज्ञानिकदृष्टिभङ्ग्या यः निष्कर्षः जायते, सः सर्वैः सहजतया स्वीक्रियते ।

**७. लेखननैपुण्यम्** - शोधप्रबन्धप्रस्तुतये गवेषकस्य लेखननैपुण्यं परमावश्यकम् । कदाचित् विषयं ज्ञात्वाऽपि गवेषकः लेखनसामर्थ्याभावात् तथ्यं सम्यगुपस्थापयितुं न समर्थः । भाषासाहित्यक्षेत्रे तु लेखनसामर्थ्यं कथं कथमपि प्रथममर्ज्जनीयम्, तदनु शोधकार्यं करणीयमस्ति । अन्यथा लेखनसामर्थ्याभावात् त्रुटिपूर्णः शोधप्रबन्धः गृहीतः न भवेत् । शोधकर्त्तुः सकलमपि श्रमजातं व्यर्थं स्यात् । तस्मात् शोधकर्त्ता शोधप्रबन्धस्य प्रस्तुतये लेखननैपुण्यमर्ज्जयेत् ।

ज्ञानस्य मूलमुत्सं प्रति गन्तुं शोधः अपेक्षते । अस्माकं राष्ट्रस्य सभ्यतायाः संस्कृतेश्च ज्ञानार्थम् एतद्देशवासिनां व्यवहारज्ञानं, परंपराज्ञानं, शिलालेखादीनामभिज्ञानं भाषासाहित्यस्य च ज्ञानं नितरामावश्यकं भवति। अतः राष्ट्रस्य संस्कृतेः ऐतिह्यस्य च सम्यग् ज्ञानाय संस्कृतभाषासाहित्यस्य

च अध्ययनमपेक्षते । राष्ट्रगौरवबर्द्धनाय ऐतिहासिकतथ्यानां प्रमाणाय च अस्माकं राष्ट्रे संस्कृतभाषामधिकृत्य अधिकादप्यधिकतरं शोधकार्यं संस्कृतमधिकृत्य स्यादिति । किञ्च डॉ. राधामोहनस्य मतानुसारम् एकः गवेषकः[१]

- प्रशस्तमनाः भवेत् ।
- सूक्ष्मविचारकः भवेत् ।
- प्रामाणिकं तथ्यं सुविस्तृतं समालोचयितुं समर्थः स्यात् ।
- शैक्षिकशृङ्खलायाम् उच्चशिक्षितः स्यात् ।
- विवदमानमपि सत्यं तथ्यं प्रकाशयितुं साहसी भवेत् ।
- विवरणीं प्राशासनिकप्रश्नावलीं तदनुरूपं तथ्यं वा समुपस्थापयितुं निपुणः स्यात् ।
- तथ्यविश्लेषणाय शोधपद्धतीनां ज्ञाता स्यात् ।
- बहूनां सूचनानां संग्रहणे च ज्ञानवान् भवेदिति ।

संस्कृतभाषासाहित्यस्य अनुसन्धाता शोधप्रविधिविषये प्रारम्भिकं तथा नितरामपेक्षितं च कौशलमधिगत्य शोधकर्मणि तत्परः भवति चेदवश्यमेव सांप्रतिकशोधक्षेत्रे संस्कृतशोधनिबन्धाः सर्वत्र सर्वैरपि सर्वथा समादृताः भवेयुरित्यलं पल्लवितेन ।

* * *

---

१. Research Methods in Education, Page No.17, Dr. Radhamohan, NeelKamal Publication Pvt. Ltd., Delhi, 2005.

## द्वितीयपरिच्छेदः

**शोधविषयनिर्वाचनम्** **(Selection of a Research Topic)** -

कस्याः अपि गवेषणायाः कृते विषयनिर्वाचनं महत्त्वपूर्णं भवति । सुचिन्तितविषयमाश्रित्य शोधः सरसः तात्पर्यपूर्णश्च भवति । समुचितविषयं विना शोधकर्मणि नूतनता न प्रतीयते । अतः शोधकार्यस्य प्रथमपदक्षेपः विषयनिर्वाचनम् । यथा - पथिकः पूर्वमेव स्वगन्तव्यस्थलं स्थिरीकृत्य तत्र गन्तुं समुचितमार्गान्वेषणे तत्परो भवति, तेन च समुचितसमये लक्ष्यस्थलं प्राप्तुं समर्थः जायते, अन्यथा पथभ्रष्टः सन् यथेच्छं विचरन् श्रममेवार्ज्जयति, तथैव गवेषकोऽपि स्यात् । श्रमसमययोः सदुपयोगाय पूर्वमेव समुचितः विषयः स्थिरीकर्त्तव्यः । शोधविषयनिरूपणाय समीक्षकाः पद्धतिविशेषान् प्रदर्शयन्ति । तथाहि -

१. योजनाबद्धपद्धतिः ।

२. स्वच्छन्दा वैयक्तिकी पद्धतिः ।

३. विषयसूचीनिर्माणपद्धतिश्चेति।

योजनाबद्धपद्धतौ गवेषणासंस्थायाः परियोजनानुसारं कस्यचित्विभागविशेषस्य पक्षतः योजनाबद्धरूपेण शोधकार्यनिर्द्धारणं क्रियते। योजनाबद्धतया विषयनिर्वाचनेन सुनिश्चिते काले शोधकार्यं सम्पादयितुं सरलं मन्यते । इदानीं भारते विश्वविद्यालयानुदानायोगाधीन

अनेके गवेषकाः, गवेषणासंस्थाः वा योजनाबद्धपद्धतिमबलम्ब्य सुनिर्दिष्टं विषयं निर्णीय च शोधप्रबन्धं समुपस्थापयितुं प्रयतन्ते । संस्कृतभाषाक्षेत्रेऽपि विदुषां समवाये योजनाबद्धपद्धत्या विषयनिर्वाचनं विधाय शोधकार्यार्थं विद्यार्थिनः प्रेरिताः भवेयुः ।

यदा शोधविद्यार्थी निजरुच्यनुसारं कमपि विषयं स्वीकृत्य मार्गदर्शकस्य समीपे आयाति, मार्गदर्शकश्च सम्यक् परिशील्य अपेक्षितस्थलेषु यथामति संशोधनं च विधाय विषयं स्थिरीकरोति ; तदा स्वच्छन्दा वैयक्तिकी पद्धतिरिति ज्ञायते । अत्र गवेषकः विषयनिर्वाचने स्वतन्त्रः। सः निजबुद्ध्यनुसारं तस्य विषयस्य युक्तियुक्तताविषये दिग्दर्शनं कुरुते ।

अद्यत्वे व्यस्तबहुले काले समुचितविषयनिर्द्धारणाय शोधच्छात्राः गवेषकाः वा आग्रहं प्रकटयन्ति । किञ्च कथमपि उपाधिप्राप्तये केचन प्रयत्नवन्तः परिदृश्यन्ते । तेन शिक्षायाः लक्ष्यं सर्वथा बाधितं भवति। शोधस्य मानमपि अनुदिनं क्षीयते । तस्मात् युगानुकूलं समाजानुकूलं च विषयं निर्णेतुं विश्वविद्यालयस्तरे विषयविशेषज्ञाः सम्भावितशोधविषयाणां सूचीं प्रस्तुवन्ति । येषु विषयेषु गवेषणाकार्यं जातम्, येषु विषयेषु च अद्यावधि न जातमिति विषयसूची निर्द्धार्यते । तामेव विषयसूचीं विलोक्य समुत्साही शोधविद्यार्थी निजदक्षतानुगुणं विषयं स्वीकृत्य शोधकार्यं प्रारभते। संस्कृतसाहित्यविषये संप्रति विषयसूचीनिर्द्धारणं नितान्तमावश्यकं प्रतिभाति। यतः भारतवर्षे संप्रति संस्कृतभाषायाः महान् प्रचारः सञ्जातः । तेन अनेके संस्कृतविश्वविद्यालयाः उन्मोचिताः । तत्र बहुषु विषयेषु शोधकार्यं द्रुतगत्या प्रवर्त्तते । अनेकाः संस्कृतशोधसंस्थाः अपि सञ्चाल्यन्ते । बहुषु विश्वविद्यालयेषु

संस्कृतविभागे शोधच्छात्राः कार्यरताः सन्ति । कदाचित् एकमपि विषयमवलम्ब्य चर्वितचर्वणरीत्या शोधसन्दर्भाः भवितुमर्हन्ति । तस्मात् विषयसूचीनिर्माणपद्धतिद्वारा सुविस्तृतस्य संस्कृतभाषासाहित्यक्षेत्रस्य कमपि निर्द्दिष्टमंशविशेषमाश्रित्य शोधकर्त्ता प्रामाणिकं सन्दर्भं प्रस्तौतुं पारयति । किञ्च संग्रहालयेषु विद्यमानानां दुर्लभताडपत्रग्रन्थानां पर्यालोचनया विषयसूचीपद्धत्या शोधविषयनिर्वाचनेन संस्कृतजगतः अमूल्यनिधेः समाजोपयोगाय संरक्षणं श्लाघ्यं भवेत् ।

शोधविषयनिर्वाचनसमये शोधकर्त्तुः मार्गदर्शकस्य च परस्परं शैक्षिकः समन्वयः भवेत् । उभयोः रुच्यनुगुणः विषयः गृह्यते चेत् कार्यमपि सरलं भवेदेव । अतः विषयनिर्वाचनप्रसङ्गे केचन अवधातव्याः सिद्धान्ताः भवन्ति । तथाहि -

**१. रुचिसिद्धान्तः** - प्रथमतः गवेषणार्थं स्वीकरणीये विषये गवेषकस्य रुचिः भवेत् । यदि गवेषकस्य मनोऽनुकुलः शोधविषयः न भवेत् , तदा एतत् कार्यं तस्मै भाराय स्यात् । गवेषकस्य व्यक्तिगताभिरुचिः (Personal Interest) शोधकार्यं सफलयति । साहित्यशास्त्रे अभिरुचिवते च्छात्राय व्याकरणादिविषयः दीयते चेत् तस्य रुचिभङ्गः भवति । तथैव कलादिक्षेत्रेष्वपि विचारणीयम् । गवेषकस्य रुच्यनुगुणा मनोवृत्तिरपि शोधकार्यानुसारिणी अपेक्षते ।

**२. उपयोगितासिद्धान्तः** - शोधविषयः समाजोपयोगी भवेत् । उपयुक्तः विषयः न स्वीकृतश्चेत् शोधकर्त्ता कदाचित् उपहासस्य पात्रं भवेत् । इदानीं विश्वविद्यालयस्तरे संस्कृतभाषाक्षेत्रे मुख्यतः लक्ष्यद्वयं पुरस्कृत्य गवेषणाकार्यं प्रचलति । छात्राः विद्यावारिधिः ( Ph.D.), विद्यावाचस्पतिः ( D. Litt.) इति च उपाधिद्वयमभिलक्ष्य शोधकार्यं कर्त्तुमुत्सहन्ते । तत्र

विद्यावारिध्युपाधये स्वीकरणीयविषयस्य महत्त्वं तथ्यानुसन्धानदृष्ट्या ग्राह्यम्। विद्यावाचस्पतिरित्युपाधये च बौद्धिकी प्रौढता तथा मौलिकी विचारयोग्यता नितरामपेक्षेते ।

**३. क्षेत्रसिद्धान्तः** - संस्कृतसाहित्यक्षेत्रमतिव्यापकमस्तीति पूर्वमालोचितमस्माभिः । अतः अतिव्यापकक्षेत्रतः विषयनिर्वाचनं सर्वथा दुरूहं प्रतिभाति । तस्मात् गवेषकः स्वदक्षतानुगुणं सीमितपरिसरयुक्तं क्षेत्रं स्थिरीकृत्य विषयं स्वीकुर्यात् । सुनिर्दिष्टक्षेत्रमाश्रित्य विषयनिर्वाचनेन शोधः सहजबोध्यः भवति ।

**४. विषयसूचीसिद्धान्तः** - पूर्वं गृहीतानां विषयाणां सूचीसंग्रहणेन अनालोचितविषयाणां चर्च्चाद्वारा समुचितः विषयः निर्द्धारयितुं शक्यते।

**५. अध्ययनक्षमतासिद्धान्तः** - शोधकर्त्तुः अध्ययनपरिसरमाश्रित्य विषयनिर्वाचनं करणीयम् । कदाचित् शोधकर्मणि रुचिवानपि गवेषकः अध्ययनसामर्थ्यरहितत्वात् तत्त्वविवेचने कष्टमनुभवति । केचन असामर्थ्यात् सम्यगध्ययनमकृत्वा यथाकथञ्चित् शोधप्रबन्धमुपस्थापयन्तः विद्वत्समाजे प्रशंसां नैव प्राप्नुवन्ति । अनेके शोधप्रबन्धाः समुचितविषय-ग्रहणाभावात् निरस्ताः अपि भवन्ति । तेन शोधकर्त्तुः न केवलं श्रमसमययोर्नाशः, अपि तु अर्थनाशः महते क्लेशाय भवति । तस्मात् शोधविषयस्य पृष्ठभूमिः सम्यक् परिशीलनीया । तत्र अध्ययनमपि यथासाध्यं विधेयम् ।

**६. तथ्यसंग्रहसिद्धान्तः** - विषयनिर्वाचने तथ्यसंग्रहणस्य सौलभ्यं विचारणीयम् । तत्र शोधकर्त्तुः प्रौढं विचारकौशलम्, अध्ययनसामर्थ्यं वा यथा आवश्यकं तथैव शोधविषयानुगुणतथ्यानां संग्रहणं सुलभमपेक्ष्यते। अन्यथा सामग्रीणामभावेन दक्षः अपि शोधकर्त्ता एकं पदं लेखितुं न समर्थः स्यात् । तदा समुचितसामग्र्यभावात् शोधः असंपूर्णः भ्रमात्मको

वा स्यात् । अतः सफलः गवेषकः विषयनिर्वाचनकाले सामग्रीसुलभतामपि विचारयेत् ।

**७. योग्यनिर्द्देशनसिद्धान्तः** - पूर्वमालोचितं सर्वमपि तथ्यं स्यात् , तथापि योग्यमार्गनिर्द्देशनस्याभावात् कदाचित् विषयनिर्णयमपि समुचितं न भवेत् । तस्मात् समुचितविषयनिर्वाचनार्थं समुचितमार्गदर्शनमपेक्षते। विषयविशेषज्ञाः एव तत्तत्विषयस्य मार्गदर्शनं कुर्वन्ति चेत् शोधकर्त्तुः उद्यमः सफलः भवति । गवेषणाज्ञानविहीनाः रुचिहीनाश्च सर्वकारीयं कार्यं करणीयमिति धिया यदि बलात् मार्गदर्शकरूपेण स्वीक्रियन्ते, तदा शोधकार्ये कदापि प्रगतिः न भवति । यथा गवेषकः समुत्साही, जिज्ञासुः, कर्मतत्परश्च भवेत् ; तथैव मार्गदर्शकोऽपि सुनिपुणः स्वविषयविवेचनपटुः निरलसः छात्रवत्सलश्च भवेत् । उभयोः गवेषकमार्गदर्शकयोः सहभावनया समुचितविषयनिर्वाचनेन प्रारब्धः शोधः सफलतासोपानमवतरति इति दिक् ।

**प्रकल्पसंरचना** ( Undertaking a Project ) -

शोधविषयस्य निर्वाचनादनन्तरं शोधकर्त्ता प्रकल्पपरिकल्पनां कुरुते । प्रायः संप्रति विश्वविद्यालयेषु विद्यावारिध्युपाधये विद्यावाचस्पत्युपाधये वा शोधच्छात्राणां पञ्जीकरणसमये संगृहीतविषयस्य संक्षिप्तं रूपरेखमर्पयितुं व्यवस्था वर्त्तते । तेन शोधकार्यस्य कांचित् परिकल्पनां कर्त्तुं शक्यते । तत्र संपूर्णोऽपि शोधविषयः विविधपरिच्छेदैः स्पष्टतया विभाजितः भवेत् । परिच्छेदेषु प्रतिपाद्यशीर्षकाणां स्पष्टप्रतिपादनार्थम् उपविभागानामपि परिकलपना करणीया । गवेषकः स्वगृहीतविषयस्य सान्दर्भिकग्रन्थानां सूचनया तत्संबद्धगवेषणानिबन्धानां च पर्यालोचनया शोधकार्यस्य संक्षिप्तं रूपरेखं स्पष्टयेत् ।

एतदतिरिक्ततया विश्वविद्यालयानुदानायोगद्वारा विविधशोध-संस्थाद्वारा वा **शोधप्रकल्पाः** ( Research Projects ) स्वीक्रियन्ते । तत्र संस्कृतभाषासाहित्यमाधारीकृत्य प्रकल्पसंरचनायां संप्रति मुख्यतः संस्कृतशोधपरिसरः विचार्य्यते । संस्कृते यत् शोधकार्यं विधीयते तत्तु भाषाभित्तिकं साहित्यभित्तिकं वेति वक्तुं शक्यते । साहित्येऽपि विवधशास्त्राणां समन्वयः परिदृश्यते । किञ्चाद्यावधि स्तरद्वयेन संस्कृते गवेषणाकार्यं प्रचलति । प्रथमं तु अप्रकाशितानां पाण्डुलिपीनां प्रकाशितानां वा अव्यवस्थितरूपेण विद्यमानानां समीक्षात्मकं संपादनम्, द्वितीयतः विविधग्रन्थानां प्रतिपादिततत्त्वानां वा पर्य्यालोचनात्मकं सांस्कृतिक-मध्ययनमिति संस्कृतशोधसन्दर्भाः प्रस्तूयन्ते । अतः शोधकर्त्ता निजज्ञानपरिसरं पर्य्यालोच्य संस्कृते शोधप्रकल्पं प्रस्तूयात् । तत्रापि सामान्यः शोधप्रकल्पः (Minor Research Project) , विशेषः शोधप्रकल्पः ( Major Research Project ) चेति द्विविधा व्यवस्था वर्त्तते । तत्र महाविद्यालये विश्वविद्यालये वा कार्यरताः शिक्षकाः विश्वविद्यालय-अनुदानायोगप्रभृतिसंस्थामाध्यमेन शोधप्रकल्पं स्वीकृत्य कार्यं कर्त्तुं पारयन्ति। कस्यापि शोधप्रकल्पस्य संरचनायां केचन अपेक्षिताः अंशाः भवन्ति । तथाहि -

- शोधकर्त्ता स्वविषये दक्षः स्यात् ।
- शोधकर्त्ता शोधकर्मणि अनुभववान् भवेत् ।
- शोधकर्त्ता कार्यरतस्यानुष्ठानमुख्यस्य अनुमतिं स्वीकुर्य्यात् ।
- सहयोगी अनुसन्धाता/अनुसन्धानसहायकोऽपि निपुणः स्यात् ।
- शोधविषयपरिसरः विस्तृतः स्पष्टश्च भवेत् ।
- प्रकल्पसंपादनाय समयसीमा निर्द्धारिता भवेत् ।
- प्रकल्पशीर्षकं निर्द्धारितं स्यात् ।
- अपेक्षितधनव्यवस्था स्यात् ।
- ग्रन्थालयस्य सुविधा भवेत् ।
- तत्र शोधपत्रिकाणां सुलभता स्यात् ।

एकस्याः शोधसंरचनायाः प्रस्तावरूपेण निम्नलिखितं प्रारूपं प्रदर्शयितुं शक्यते । तत्र यू.जी.सी.प्रभृतिसंस्थानां सामान्यशोधप्रकल्पस्य प्रारूपं यथा -

१. सुविस्तृतः शोधविषयपरिसरः (Broad Subject) -

२. सुनिर्दिष्टं स्वतन्त्रं क्षेत्रम् (Area of Specialization) -

३. अवधिः (Duration) -

४. प्रमुखः अनुसन्धाता (Principal Investigator) -

(क) नाम -

(ख) लिङ्गम् -

(ग) जन्मदिनम् -

(घ) शैक्षिकयोग्यता -

(ङ) पदवी -

(च) सङ्केतः -

कार्यालयस्य -

आवासस्य -

५. सहयोगी अनुसन्धाता (Co-Investigator) -

(क) नाम -

(ख) लिङ्गम् -

(ग) जन्मदिनम् -

(घ) शैक्षिकयोग्यता -

(ङ) पदवी -

(च) सङ्केतः -

कार्यालयस्य -

आवासस्य -

५. अनुष्ठानस्य नाम यत्र प्रकल्पोऽयं गृहीतः स्यात् ।

( Name of the Institution where the project will be undertaken )

(क) विभागः ( Department )-

(ख) महाविद्यालयः/विश्वविद्यालयः -

( College/University )

६. विश्वविद्यालयानुदानायोगस्य अधिनियमधारायाः (Section 2 (f) & 12 B) महाविद्यालयः/विश्वविद्यालयः अङ्गीकृतो न वा ?

७. प्रमुख-अनुसन्धातुः शैक्षिकी योग्यता गवेषणानुभवश्च ।

(शैक्षिकी योग्यता :- स्नातकस्तरे ——— वर्षाणि ।

स्नातकोत्तरस्तरे ——— वर्षाणि ।

(ख) गवेषणानुभवः :-

(ग) प्रकल्पोऽयं विद्यावारिध्युपाधये विश्वविद्यालयेन स्वीकृतो न वा ? आम् / न ।

(I) पञ्जीकरणदिनाङ्कः -

(II) विश्वविद्यालयद्वारा स्वीकृतस्य निरीक्षकस्य नाम पदं च -

(III) विश्वविद्यालयस्य नाम यत्र पञ्जीकृतम् -

(घ) यदि शोधकर्त्तुः विद्यावारिधिरित्युपाधिः स्यात्, तदा

(I) शोधसन्दर्भस्य शीर्षकम् -

(II) उपाधिप्राप्तेः वर्षम् -

(III) विश्वविद्यालयस्य नाम -

(ङ) प्रकाशनानि : **पत्राणि** - प्रकाशितानि :

- गृहीतानि :

- उपस्थापितानि

**पुस्तकानि** - प्रकाशितानि :

- गृहीतानि :

- उपस्थापितानि

( विगतपञ्चवर्षेषु गृहीतानां प्रकाशितानां वा शोधपत्राणां पुस्तकानाञ्च तालिका संयोजनीया )

## प्रस्तावितं शोधकार्यम्

८. ( I ) प्रकल्पशीर्षकम् ( Project Title) :

( I I ) उपक्रमः ( Introduction) :

* शोधसमस्यायाः मूलम्

( Origin of the research problem)

* आभ्यन्तरीणशृङ्खलायाः प्रासङ्गिकता

( Interdisciplinary relevance )

* शोधस्य पुनः परीक्षणम् वैषयिकी प्रगतिश्च

( Review of Research & Development in the Subject )

- आन्तराष्ट्रिया मर्यादा
- राष्ट्रिया मर्यादा
- अध्ययनस्य तात्पर्यम्

( III ) शोधकार्यस्य उद्देश्यानि

(IV) शोधप्रविधिः

(V) शोधकार्यस्य संपूर्त्तये वर्षानुसारं योजनाः

(VI) सहयोगस्य विवरणम् (अपेक्षितं चेत् )

९. अपेक्षितः आर्थिकः सहयोगः -

| वस्तुनि | आकलितः व्ययः |
|---|---|
| I. पुस्तकानि पत्रिकाश्च | रू. |
| II. उपकरणानि ( नाम मूल्यं च लेखनीये ) | रू. |
| III क्षेत्रकार्यं भ्रमणं च | रू. |
| IV. अत्यावश्यकः व्ययः | रू. |
| आहत्य | रू. |

१०. शोधप्रकल्पस्य कृते यदि शोधकर्त्ता कस्याश्चित् संस्थायाः पक्षतः किमप्यार्थिकमनुदानं पूर्वं स्वीकृतवान् स्यात्, तदा पूर्णं विवरणम् :

११. प्रमुखः अनुसन्धाता यदि कस्मिन्नपि शोधप्रकल्पे कार्यरतः, तर्हि तस्य विवरणम् :

१२. प्रस्तावितशोधकार्यस्य कृते निजशिक्षानुष्ठने विभागे वा समुपलब्धस्य सौविध्यस्य विवरणम् :

१३. अन्यः कश्चित् सूचनाविशेषः दातुं शक्यते, येन शोधप्रकल्पस्य मूल्याङ्कनं कर्त्तुं सहायतामाचरेत् ।

१४. अन्ते प्रतिज्ञाप्रमाणपत्रमपि योजनीयम् । यथा-

(क) इदं शिक्षानुष्ठानं यू.जी.सी.नियमानुसारमनुदानं प्राप्तुमर्हति ।

(ख) शोधकार्यस्य सामान्योपकरणान्यत्र सुलभानि सन्ति ।

(ग) शोधप्रकल्पस्य कृते प्रदत्तस्यानुदानस्य सन्दर्भे मया/अस्माभिः यू.जी.सी.नियमाः प्रतिपालयिष्यन्ते ।

(घ) मया/अस्माभिः निर्द्धारितकालावधौ प्रकल्पस्य परिपूर्त्तिः साधयिष्यते, अन्यथा यू.जी.सी. प्रकल्पस्य निरस्तं कृत्वा यथाशीघ्रं गृहीतमप्यर्थं प्रत्यर्पयितुमादिशेत् ।

**नामानि हस्ताक्षराणि च** क. प्रमुखः अनुसन्धाता

ख. सहयोगी अनुसन्धाता

ग. शिक्षानुष्ठानमुख्यः

स्थानम् : (मुद्राङ्कसहितं हस्ताक्षरम् )

दिनाङ्कः :

**तथ्यसंग्रहणम् -** शोधकार्ये विषयनिर्वाचनात्परं प्रकल्पपरिकल्पनया केचन कार्यमारभन्ते । अन्ये केचन तु विश्वविद्यालयस्तरे उपाधिप्राप्तये शोधकार्ये प्रयतन्ते । उभयत्रापि पञ्जीकरणादनन्तरं शोधकर्त्तुः प्रमुखमुत्तरदायित्वं भवति तथ्यसंग्रहणम् । शोधकर्त्ता शोधपरिसरं पर्य्यालोच्य तथ्यसंग्रहणं कुर्य्यात् । स्वशोधविषयसंपृक्तानां प्राचीनानां नवीनानां च तथ्यानां प्रथमं संग्रहणमावश्यकम् । संगृहीतं तथ्यं सर्वथा शोधविषयानुकूलं, मौलिकं, प्रामाणिकं, सारभूतं च भवेत् । अनपेक्षितं तथ्यं संगृहीतमपि परित्यक्तव्यं भवति । तथ्यसंग्रहणकाले यदा विषयानुकूलं समधिकं तथ्यं न प्राप्यते तदा तथ्यसंग्रहणं समाप्ततामेति । शोधकर्त्तुः दृष्टिभङ्गी शोधपरिसरानुकूला सुविस्तृता स्पष्टा च भवेत् । तथ्यसंग्रहणे प्रथमः प्रयासः भवति अपेक्षिततत्त्वानां स्थिरीकरणम् । शोधसहायकसामग्रीणां सूचीनिर्माणेन च तथ्यसंग्रहणं प्रारम्भणीयम् ।

तथ्यसंग्रहणाय केचन उपायाः भवन्ति । यथा -

**(१) शोधविषयस्य अध्ययनम् :-** आदौ शोधविषयकं तथ्यं संग्रहीतुम् इतिहासग्रन्थाः, कोशग्रन्थाः, विविधग्रन्थप्रकाशकानां ग्रन्थसूची, शोधपत्रिकाश्च द्रष्टव्याः । शोधविषयं सम्यक् परिशील्य विविधपुस्तकालयेषु गत्वा शोधसंपृक्तं तथ्यं केषु केषु ग्रन्थेषु निहितमिति सूची निर्मातव्या । ततः अपेक्षितग्रन्थानां पत्रिकाणां वा पठनेन तथ्यं मिलति । क्वचित् अप्रकाशितपाण्डुलिपीनां ताडपत्रग्रन्थानां वा सूचना प्राप्यते । ततस्तत्र तत्र गत्वा सयत्नं तथ्यं संग्रहणीयमस्ति ।

**(२) लिखितप्रामाणिकतथ्यसम्बलितपत्राणाम् अन्वेषणम् -** गवेषकः पत्रिकातः पुस्तकसूचीतो वा शोधविषये प्राथमिकीं सूचनां प्राप्य निर्द्दिष्टग्रन्थानां लिखितप्रमाणपत्राणां वा अन्वेषणे तत्परः भवेत् । तथ्यसंग्रहणकाले शोधविषयसमबन्धितक्षेत्रे कुशलानां केषांचन विदुषां नामानि संगृह्य तैः सह प्रत्यक्षसंपर्कं विधाय तेषां सहयोगेन च तथ्यमधिगन्तुं प्रयतेत । सर्वकारपक्षतः विविधगणमाध्यमपक्षतः वा तदा तदा

विविरणात्मकं प्रगतिपत्रं प्रकाश्यते । अभिलेखागारेषु संग्रहालयेषु वा सुरक्षितानां तेषां विवरणानां संग्रहणमपि कर्त्तुं शक्यते । दैनन्दिनी, आत्मजीवनी, भ्रमणानुभूतिसम्बलितकथा वा लेखकस्य संग्रहीतुं शक्यते।

**(३) प्रामाणिकतथ्यानां प्रत्यक्षनिरीक्षणम्** - तथ्यसंग्रहणकाले प्रत्यक्षनिरीक्षणमपेक्षते । यथासंभवं प्रामाणिकं तथ्यं सम्परीक्ष्य ग्रहणीयम्। प्रत्यक्षनिरीक्षणेन संग्रहणीयतथ्यस्य सत्यता प्रतिपाद्यते । गवेषकः प्रत्येकमपि प्रामाणिकतथ्यं परीक्षितुं विविधप्रश्नान् कर्त्तुं शक्नोति -

(I) संगृहीततथ्यसम्बलितं पुस्तकं कतमं सम्पादनम् ?

(II) एतस्याः प्रतिलिपेः प्रकाशनस्य तिथिः का ?

(III) एतस्याः प्रतिलिपेः प्रथमप्रकाशनकालः कः ?

(IV) किमिदं पुस्तकं प्रामाणिकम् ?

(V) पुस्तकेऽस्मिन् प्रतारणात्मकं किमपि तत्त्वं वर्तते वा ? इत्यादि।

**(४) क्षेत्रकार्यसंपादनम्** - विशिष्टजनैः सह प्रत्यक्षसंपर्कद्वारा तेषां सूचनानुसारं तथ्यसंग्रहणं समुचितमिति अनुपदमेव कथितमस्माभिः । केवलं ग्रन्थसूचनानुसारं तथ्यं पर्याप्तं न भवति , सम्बद्धितं क्षेत्रं गत्वा प्रश्नोत्तरविधिमाध्यमेन साक्षात्कारविधिमाध्यमेन वा तथ्यं संग्रहणीयम्। भाषाविज्ञानक्षेत्रे ध्वनिमुद्रिकादिव्यवहारेण वर्णोच्चारणतथ्यं स्वीकर्त्तुं शक्यते। ऐतिहासिकस्थानानां गवेषणायां च चित्रोत्तोलनेन तथ्यं स्वीकर्त्तव्यम् । लोकसाहित्यगवेषणाक्षेत्रे गवेषकः तत्तत्प्रान्तं गत्वा तत्रत्यैः जनैः सह मिलित्वा तथ्यं स्वीकुर्य्यात् । तत्रापि व्यवहारकुशलता अपेक्षते । समाजे लब्धप्रतिष्ठानां महतां जनानां सम्पर्केण अत्यावश्यकं तथ्यमनायासेन संगृह्यते ।

**(५) प्रश्नावलीप्रस्तुतीकरणम्** - तथ्यसंग्रहणाय अत्युत्तमं माध्यमं भवति प्रश्नावलीप्रस्तुतीकरणम् । सीमितसमयमध्ये समुचितप्रश्नावलीपत्रद्वारा परिसंख्यानात्मकं तथ्यं संग्रहीतुं शक्यते । यदि गवेषकः सर्वत्र गन्तुं समयदृष्ट्या अर्थव्ययदृष्ट्या वा न समर्थः, तर्हि

पत्रालापमाध्यमेन समुचितप्रश्नावलीपत्रप्रेषणद्वारा तथ्यं संग्रहीतुं शक्नोति । एतदर्थं गृहीतशोधविषयं तत्परिसरं च संपरीक्ष्य प्रश्नाः प्रस्तोतव्याः भवन्ति । तत्रापि निम्नलिखिताः सावधानताः अवलम्बनीयाः। तथा हि -

**क.** प्रश्नाः सरलाः सुस्पष्टाश्च भवेयुः ।

**ख.** प्रश्नाः सुन्दराक्षरैः कर्गजपत्रस्य एकस्मिन्पार्श्वे लिखिताः उट्टङ्किताः वा भवेयुः ।

**ग.** प्रश्नसमीपे उत्तरम् अभिमतं वा लेखितुं पर्य्याप्तं स्थानं भवेत् ।

**घ.** द्विधा-उत्तरसम्बलिताः प्रश्नाः न भवेयुः ।

**ङ.** एकाधिकप्रश्नाः एकस्मिन् प्रश्ने मिलिताः न भवेयुः ।

**च.** दीर्घ-उत्तरमूलकाः प्रश्नाः न भवेयुः ।

**छ.** प्रश्नाः क्रमबद्धाः स्युः ।

प्रश्नोत्तरमाध्यमेन तथ्यसंग्रहणसमये गवेषकः दायित्ववान् भवेत्। सुशिक्षितजनेभ्यः विषयविशेषज्ञेभ्यश्च तथ्यं संग्रहणीयम् । एतदतिरिक्ततया सहजभावेन तथ्यं संग्रहीतुं गवेषकः एन्साइक्लोपेडिआ-आमेरिका, एनसाइक्लोपेंडिआब्रिटानिका, एनसाइक्लोपेडिआ ·आफ् सोसियल साइन्स, एनसाइक्लोपेडिआ आफ् रिलिजियन्स आण्ड थेसिस् , एनसाइक्लोपेडिआ आफ् एडुकेसनल रिसार्च्च Census Report, Different Commissions Report, Different Committee Report, Gazzatier, Cumulative Book Index, The Descriptive Catalagous of Sanskrit Manscripts, Research Journals च पर्य्यालोचयेत् । एतत् सर्वं National Library Calcutta, Parliament Library, National Archieves, State Archieves प्रभृतिषु संस्थासु सुलभं भवति । इदानीं भारतीयभाषा-साहित्यक्षेत्रे गवेषणार्थं विविधविश्वविद्यालयेषु पुस्तकालयाः प्रतिष्ठापिताः

सन्ति । तथापि संस्कृतभाषासाहित्यक्षेत्रे राष्ट्रियसंस्कृतसंस्थानस्य इलाहावादस्थित-श्रीगङ्गानाथझापरिसरपाठागारः, पुरीस्थितः श्रीसदाशिवपरिसरपाठागारः, श्रीजगन्नाथसंस्कृत-विश्वविद्यालयपाठागारः, वाराणससीस्थः हिन्दुविश्वविद्यालयपाठागारः, कोलकाता-विश्वविद्यालय-पाठागारः, पुण्यपत्तनस्थः डेकानकालेज् रिसार्च्चे इन्ष्ट्युटुट्, भण्डारकर-ओरिएण्टाल- रिसार्च्चे-इन्ष्ट्युटुट्, कोलकातास्थः मुम्बैस्थश्च एसियाटिक् सोसैटि लाइब्रेरी, तिरुपतिस्थः राष्ट्रियसंस्कृतविद्यापीठपाठागारः, दिल्लीस्थ-राष्ट्रियसंस्कृत-संस्थानपाठागारः, लालबहादूरशास्त्रिराष्ट्रियसंस्कृत-विद्यापीठपाठागारश्च, मद्रासस्थः आडायार लाइब्रेरी, कर्णाटकराज्यान्तर्गतः मेलूकोटस्थित-संस्कृतगवेषणासंस्थाप्रभृतयः उल्लेखनीयाः सन्ति । गवेषकः स्वावश्यकतानुसारं तत्रत्यग्रन्थागारैः अधिकारिभिः वा पत्रसंपर्कं विधाय Micro-film द्वारा, अथवा Xerox Copy द्वारा समुचितमूल्यप्रदानेन तथ्यं संग्रहीतुं पारयति ।

**संस्कृतशोधपत्रिकाणां व्यवहारः -** समाजस्य सांस्कृतिकविकासाय साहित्यपत्रिकाणां महद्योगदानं वर्त्तते । भाषायाः विकासे पत्रिकाः महत्त्वपूर्णां भूमिकां निर्वहन्ति । पत्रिकासु नूतनानि तथ्यानि प्रकाशितानि भवन्ति । शोधकर्त्ता शोधप्रबन्धस्य सफलतायै विविधशोधपत्रिकाणां परिशीलनं कुर्य्यात् । तथ्यसंग्रहणे पत्रिकाः प्रमुखतया उपकुर्वन्ति । संस्कृतभाषासाहित्यक्षेत्रे संप्रति विभिन्नस्थानतः विविधाः पत्रिकाः प्रकाश्यन्ते। तत्रापि विद्वांसः स्वशास्त्रसिद्धान्तान् सरलया भाषया प्रकाशयन्ति । अतः संस्कृतभाषायाः गवेषकः संस्कृतशोधपत्रिकाणां पर्य्यालोचनां कुर्य्यात्। प्रसङ्गवशतः काश्चन शोधपत्रिकाः उल्लिख्यन्ते -

**१.श्रीजगन्नाथज्योतिः -** इयं षाण्मासिकी शोधपत्रिका

श्रीजगन्नाथसंस्कृतविश्वविद्यालयः, पुरीतः प्रकाश्यते । अस्यां पत्रिकायां संस्कृत-आङ्ग्लभाषाभ्यां शोधप्रबन्धाः अत्युपादेयाः भवन्ति ।

**२.संस्कृतविमर्शः** - नवदेहलीस्थ-राष्ट्रियसंस्कृतसंस्थानपक्षतः संस्कृतविमर्शः इति षाण्मासिकी शोधपत्रिका संस्कृत-आङ्ग्लभाषाभ्यां समलङ्कृता विदुषां मोदं तनुते ।

**३.संस्कृतमञ्जरी** - दिल्लीसंस्कृत-अकादमीद्वारा प्रकाशिता संस्कृतमञ्जरी इति त्रैमासिकी संस्कृतपत्रिका बहुविधैः शोधलेखैः सुसज्जिता संस्कृतसमाजे चकास्ति ।

**४.सागरिका** - मध्यप्रदेशस्य सागरविश्वविद्यालयतः सागरिकासमितिद्वारा प्रकाशिता सागरिका इति संस्कृतत्रैमासिकी पत्रिका निरन्तरं प्रकाश्यते। तत्र बहुविधैः शोधलेखैः सह नवीनाः अपि रचनाः पाठकमनांसि रञ्जयन्ति।

**५.शोधप्रभा**- नवदेहलीस्थ-लालबहादुरशास्त्रिराष्ट्रिय-संस्कृतविद्यापीठपक्षतः प्रकाशिता शोधप्रभानाम्नी वार्षिकी शोधपत्रिका संस्कृतजगति शोधक्षेत्रे असीमप्रेरणाप्रदायिनी भवति ।

**६.वाणीज्योतिः** - भुवनेश्वरस्थित-उत्कलविश्वविद्यालयस्य संस्कृतविभागपक्षतः वाणीज्योतिरिति वार्षिकी शोधपत्रिका प्रकाश्यते।

**७.लोकप्रज्ञा** - लोकभाषाप्रचारसमितिद्वारा परिचालितस्य ओडिशाराज्यस्य भद्रकनगरस्थित-सरस्वतीशोधसंस्थानस्य वार्षिकी शोधपत्रिका लोकप्रज्ञा आङ्ग्ल-संस्कृतभाषाभ्यां विमण्डिता संस्कृतगवेषकाणां कृते सम्यक् मार्गदर्शनं करोति ।

एतदतिरिक्ततया सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,वाराणसीतः प्रकाशिता **सरस्वतीसुषमा**, राजस्थान-साहित्य-अकादमी,उदयपुरतः प्रकाशिता **स्वरमङ्गला**, ओडिशा-संस्कृत-अकादमी,भुवनेश्वरतः

प्रकाशिता **वसुन्धरा**, संस्कृतगवेषणासमाज - पुरीतः प्रकाशिता **दिग्दर्शिनी**, पुरीतः प्रकाश्यमाना द्वैमासिकी संस्कृतपत्रिका **प्रियवाक्**, शिक्षाशास्त्रमधिकृत्य पुरीतः प्रकाश्यमाना त्रैमासिकी **शिक्षासुधा**, दृग्भारती-इलाहावादतः संस्कृत-हिन्दी-आङ्ग्लभाषाभिः समलंकृता समकालिकसंस्कृतसाहित्यसमीक्षापत्रिका **दृक्** इति च बहुविधाः संस्कृत-पत्रिकाः तदा तदा शोधलेखानां प्रकाशनेन संस्कृतभाषासाहित्यस्य विकाशे महान्तमुपकारं साधयन्ति ।

**पत्रीकरणम् (Documentation)** - संगृहीततथ्यानां प्रतिकृतिमाध्यमेन भविष्यतवंशधराणां कृते संरक्षणं नाम पत्रीकरणं कथ्यते । संग्रहालयेषु पाठागारेषु अभिलेखागारेषु संरक्षणप्रयोगशालासु वा संगृहीत-तथ्यानामविकला प्रतिकृतिप्रस्तुतिः पत्रीकरणद्वारा सुरक्षिता भवति।

**शोधकार्ये पत्रीकरणस्यावश्यकता** (Necessity of Documentation in Research Work) - पत्रीकरणद्वारा भविष्यतः कृते केवलं तथ्यसंरक्षणं न विधीयते, अपि तु संगृहीततथ्यानां विधिवद्धतया परीक्षणाय क्रमबद्धरूपेण व्यवस्थापनं क्रियते । अतः शोधकर्मणि पत्रीकरणस्य महत्त्वमनुभूयते । तत्र भाषासाहित्यस्य तुलनात्मकाध्ययनक्षेत्रे पत्रीकरणमपेक्षते । सर्वेक्षणात्मकशोधविधाने संपृक्तव्यक्तेः अनुपस्थितौ पत्रीकरणद्वारा संरक्षिततथ्यानां विश्लेषणं कर्त्तुं शक्यते । ऐतिहासिकशोधविषये मूलग्रन्थस्य वा बलिष्ठप्रमाणमुपस्थापयितुं पत्रीकरणं सहायकं भवति ।

**सामान्येन पत्रीकरणोपायाः -**

१. संगृहीततथ्यानां लिखितप्रमाणद्वारा पत्रीकरणाय प्रारूपं (Prescribed Format) संरचनीयम् । तत्र वस्तुनः प्रामाणिकता, अधिकर्त्ता(Owner),

सूचनास्रोतः (Source of information), विस्तृतवर्णना (Brief Description), सांप्रतिकी अवस्थितिः पूर्वावस्थितिश्चोल्लेखनीयाः।

२. कस्यचित् तथ्यस्य रेखाचित्रमाध्यमेन सूक्ष्म-अङ्कनीद्वारा(Sharp-Pencil) चिह्नितपत्रस्य (Tracing Paper) उपरि संग्रहणं रैखिकं चित्रीकरणम् (Graphic Documentation) इति कथ्यते ।

३. कस्यचित् वस्तुनः तथ्यस्य वा छायाचित्रोत्तलनेन पत्रीकरणं सम्भवति। तत्र अत्यावश्यकस्थलमेव निश्चित्य छायाचित्रमुल्लेखनीयम् ।

सर्वेक्षणशोधपद्धतौ दृश्यश्रव्यात्मकतथ्यसंग्रहणाय Video Camera प्रयुज्यते । तेनापि पत्रीकरणं सहजं भवति । छायाचित्रसंग्रहणात्परं Digital Camera द्वारा Computer यन्त्रेऽपि तथ्यं पत्रीकरणाय सुकरं भवति। इदानीं तु दुर्लभताडपत्रग्रन्थानां Microfilm द्वारा पत्रीकरणेन बहवः गवेषकाः उपकृताः भवन्ति । अनेन अनायासेन सर्वमपि तथ्यं शोधप्रबन्धप्रस्तुतये सज्जीकृतं सत् समुपलभ्यते । पत्रीकरणावसरे निम्नलिखितविषयेषु ध्यानं दातव्यम् -

**पादटीकायाः युक्तियुक्तता** (Footnote Logic) - पादटीकाद्वारा शोधपत्रे गृहीतप्रसङ्गस्य समालोचनायां परिपूर्णता प्रतीयते । सम्पादितस्य पाठ्यांशस्य पूर्णताविधानं पादटिप्पणीद्वारा क्रियते । पादटीका पादटीप्पणी वा लिखितपृष्ठस्य पाददेशे उल्लिखिता भवति । पादटीका-

- पाठ्यांशस्य मूलमुत्सं सूचयति ।
- पाठ्यांशस्य सहायकानि उपादानानि उपस्थापयति ।
- अपेक्षितं तत्त्वं परिशीलयितुं पाठकान् प्रेरयति ।
- पाठ्यांशस्य प्रामाणिकतां द्रढयति ।

अतः पत्रीकरणसमये पादटीकायाः प्रयोजनीयता वर्त्तते ।

**पादटीकासंख्यानम्** **(Footnote Number) -** पत्रीकरणसमये पादटीकासंख्या स्पष्टतः उल्लेखनीया । तेन शोधतथ्यसमाकलनं सुकरं सञ्जायते । एकतः आरभ्य पादटीका क्रमानुसारं संख्याता भवेत् । अध्यायसमाप्तिपर्यन्तं पादटीकानां संख्या क्रमबद्धतया अविच्छिन्ना व्यवहार्या। आवश्यकस्थले रोमान्संख्याद्वारा, अक्षरक्रमानुसारं क,ख,ग-इत्यादिभिः वा पादटीकानां संख्या निर्द्धारणीया ।

**प्रथमपादटीकाटिप्पणीसूचना** (First Footnote Reference) - संगृहीतशोधविषयस्य परीक्षणाय प्राथमिकी पादटीका अपेक्ष्यते । अनुसन्धानकार्यमग्रेसारयितुं प्राथमिकपादटीकायां काश्चन सूचनाः भवेयुः-

१. ग्रन्थकर्त्तुः कर्त्तृणां वा नामानि अनुक्रमतया उल्लेखनीयानि ।

२. संगृहीतस्य ग्रन्थांशस्य अध्यायस्य वा शीर्षकम् उद्धरणचिह्नैः सूचनीयम्।

३. शोधप्रबन्धस्य शीर्षकं निम्नरेखाङ्कितेन चिह्नितं स्यात् । यदि तत्र उपशीर्षकं भवेत्, तदा पृथग्रूपेण स्पष्टीकर्त्तुम् उपशीर्षकं निम्नरेखाङ्कितं कृत्वा (:) चिह्नेन सूचनीयम् ।

४. सङ्कलकस्य सम्पादकस्य अनुवादकस्य च नामानि क्रमानुसारमुल्लेखनीयानि ।

५. सम्पादनकालः उल्लेखनीयः । नूतनं मुद्रणं वा पुनर्मुद्रणं वेति ज्ञातुं मुद्रणतिथिरुल्लेखनीया ।

६. अनुक्रम संख्यया चिह्नितः स्यात् ।

७. प्रभागानां संख्या (Numbers of Volumes) स्पष्टं सूचनीया ।

८. प्रकाशकः, प्रकाशनस्थानम्, प्रकाशनकालश्चोल्लेखनीयाः ।

९. पृष्ठासंख्या स्पष्टतः उल्लेखनीया ।

१०. आवश्यकतानुसारं विरामचिह्नानां व्यवहारः करणीयः ।

**पुस्तकेषु प्रतीकपादटिप्पणी** (Sample Footnotes in Books) -

प्रकाशितेषु पुस्तकेषु प्रतीकपादटिप्पणी दृश्यते । इयं वाक्यशेषे अन्तिमशब्दस्योपरिभागे लिखितसंख्याद्वारा सूच्यते । लेखकः स्वलिखितविवरणस्य प्रतिपृष्ठं स्वतन्त्रसंख्यया अथवा अध्यायान्ते क्रमिकसंख्यया पादटिप्पणीं सूचयति । यदि पाठ्यांशस्य मुद्रितसामग्री लभ्यते, तदा मुख्यपृष्ठस्य अधः स्वतन्त्राक्षरैः निरन्तरतया उल्लिखिता भवति। उदाहरणं यथा **महाकविकालिदासविरचितरघुवंशद्वितीयसग (२/५७)**-

"किमप्यहिंस्यस्तव चेन्मतोऽहं
यशःशरीरे भव मे दयालुः ।
एकान्तविध्वंसिषु मद्विधानां
पिण्डेष्वनास्था खलु भौतिकेषु ।।"

इति श्लोके मल्लिनाथकृतसञ्जिवनीव्याख्यायां 'भौतिकेषु' इति पदस्य टिप्पणी यथा - धीरस्तु भौतिकपिण्डेष्वनास्था भवतीति भगवताप्युक्तं गीतायाम् (२/१३) - "देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ।।" इति।

**पत्रिकासु प्रकाशितानां प्रबन्धानां टिप्पण्यां सूचना** (First Footnote Reference Articles in periodicals) - शोधकर्त्ता प्रथमपादटिप्पण्यां प्रकाशितासु पत्रिकासु शोधपत्रेषु वा प्रकाशितानां प्रबन्धानां सूचनां कुर्यात्। तत्र लेखस्य नाम, प्रबन्धस्य शीर्षकम्, पत्रिकायाः नाम, प्रकाशनकालः, प्रकाशनसंख्या, प्रकाशितपृष्ठसंख्या च स्पष्टतः उल्लेखनीयाः ।

**प्रतिप्रतीकांशस्य टिप्पण्यां सूचना** (Parenthetical Documentation) - शोधकर्त्ता पत्रीकरणसमये बन्धनी( )मध्ये अनुच्छेद" "मध्ये वा लिखितानि यानि तथ्यानि प्राप्नोति तानि सूचनार्थं टिप्पण्यां स्थापयति। यथा -

श्रीजगन्नाथसंस्कृतविश्वविद्यालयस्य " श्रीजगन्नाथज्योतिः " - Volume-6, 2001 इति गवेषणापत्रिकायां 'जगन्नाथधर्मः'.इति शोधप्रबन्धे Reference स्थाने Divakar Dash, jagannath caritamrta p.55 and pp.162-163, Gupta Gita,Ch.4. इति उल्लेखः दृश्यते ।

**मातृकाप्रस्तुतिः** ( Preparing the Manuscript ) - संस्कृतभाषायां मातृका पाण्डुलिपिः वा अप्रकाशितहस्तलिखितस्य लेखस्य कृते व्यवह्रियते । इदानीं विज्ञानस्य प्रगत्या टङ्कणयन्त्रद्वारा (Type Machine) अथवा सङ्गणकयन्त्रद्वारा (Computer) अपि मातृका प्रस्तूयते । इदानीं भारतवर्षे हस्तलेखाः ताडपत्रग्रन्थेषु, भुर्जपत्रेषु, कार्पासपट्टिकासु, काष्ठफलकेषु, ताम्रफलकेषु, शिलाफलकेषु, कर्गजपत्रेषु वा नानासंग्रहालयेषु सुरक्षिताः सन्ति । अस्माकं भारतीयसंस्कृतेः ऐतिह्यस्य ज्ञानस्य च मूलस्रोतस्तत्रैव विद्यते । ताडपत्रपाण्डुलिपीनां संरक्षणाय अपि National Mission For Manuscripts) इति संस्था राष्ट्रस्तरे कार्यं करोति ।

मातृका अथवा पाण्डुलिपिः इति शब्दः आङ्गलभाषायां Manuscript इत्युच्यते । तदुक्तं K. Maheswaran Nair महोदयेन तदीये Manuscriptiology इति ग्रन्थे - The word 'Manuscript' is formed of two elements namely 'Manu' and 'Scripts'. 'Manu' stands for manual originating from Latin 'Manus' meaning hand. Script is from Latin 'Scribere' meaning to write. The two semantic elements of the word Manuscript, therefore

1. It is manually written and 2. It is in some script form.[1]

Revati. P. Deshmukh महोदया तदीये A Study of the Descriptive Catalogues of Sanskrit Manuscripts इति ग्रन्थे उल्लिखति यत् 'The term 'Manuscript' has been used in the past to cover different reading materials. In the 16th & 17th Centuries the term 'Manuscript' was used to indicate a bound volume of hand-written material comparising a book or collections of books and treatises [2] इति ।

---

1. K.Maheswaran Nair, Manuscriptiology, Page no. 79, Swantham Books, Trivendrum-10, 1998
2. Revati. P. Deshmukh, The Descriptive Catalogus of Sanskrit Manuscripts, Page no. 26, Rupa Offset Printers, 1996

भारते मुख्यतः भुर्जपत्रमातृका, ताडपत्रमातृका, कर्गजमातृका च दीर्घलेखलेखनाय उपयुक्ता इति विचारयामः । मातृकासंपादने स्थानानुसारम् अपेक्षितवस्तूनां संग्रहणं करणीयम् । भारते भुर्जपत्राणि, ताडपत्राणि, कर्गजपत्राणि वा लेखनोपकरणत्वेन स्वीकृतानि, इदानीमपि स्वीकर्त्तुं शक्यन्ते ।

**(१) भुर्जपत्रमातृकाप्रस्तुतीकरणविधिः** - भुर्जपत्रेष्वपि मातृकासंपादनस्य विधिः भारते दृश्यते । हिमालयक्षेत्रे प्रचुरतया भुर्जपत्राणि (Birch-Bark) प्राप्यन्ते । भुर्जः (Birch-Tree) इति वृक्षस्य बल्कलमेव लेखनोपयोगि सम्पाद्यते । एतदर्थं समुपयुक्तमापनेन खण्डशः भुर्जवृक्षं कर्त्तयित्वा ततः बल्कलं निःसार्यते । ततस्तत्र तैलादिसंयोजनेन तदुपरि कोमलतां सम्पाद्य लेखनयोग्यता विधीयते । उत्तरभारते कश्मीरादिषु भुर्जपत्रमातृकाः बहुलतया प्रस्तूयन्ते । भुर्जपत्रेषु मसीयुक्तलेखन्या लेखितुं शक्यते ।

**(२) ताड़पत्रमातृकाप्रस्तुतीकरणविधिः** - प्राचीनकाले भारतवर्षे मातृकासंपादनाय ताडपत्रं लेखनोपकरणत्वेन स्वीकृतमासीत् । इदानीं तु मठमन्दिरादिषु पूजाकर्मणि वा विशेषसन्दर्भे ताडपत्रेषु मातृकालेखनं भवति । ओडिशाराज्ये नवजातशिशूनां जन्मपत्रनिर्माणे ताडपत्रेषु लेखनविधिः दृश्यते । पुरीसमीपवर्त्तिनि रघुराजपुरमिति सुप्रसिद्धे शिल्पग्रामे ताडपत्रेषु लेखनविधेः विविधसांस्कृतिकसन्दर्भाणां चित्ररूपेण वर्णनात्मककौशलस्य च शिक्षणमपि प्रचलति । अतः ताडपत्राणामुपयोगेन यदा मातृकासंपादनं करणीयम्, तदा तालवृक्षस्य श्रीतालस्य वा पत्राणि संग्रहणीयानि । एतदर्थं काचित् स्वतन्त्रा प्रक्रिया अनुसृता भवति । तथाहि -

- ताडवृक्षाणां कोमलानि हरित्पत्राणि कर्त्तयित्वा विधिपूर्वकं सूर्यातपेषु शुष्कीक्रियन्ते ।
- धूमीकरणविधिना मृत्पात्रेषु चूल्ल्यां स्थापयित्वा सिद्धीक्रियन्ते ।
- जलाशयेषु कर्द्दमाक्तस्य जलस्याधः १०/१५ दिनानि वा स्थाप्यन्ते ।
- काष्ठखण्डस्योपरि घर्षणेन पत्राणि सरलीक्रियन्ते ।
- समुपयुक्तैः आकारैः ताडपत्राणि कर्त्त्यन्ते ।
- ततः प्रति पत्रं मध्यभागे छिद्रं क्रियते, येन मातृकायाः बन्धनाय सूत्रं संयोजयितुं शक्यते ।
- तीक्ष्णलौहकण्टकाकारणे लेखनीविशेषेण तदुपरि लेखनं विधीयते ।
- तत्र खोदितानि अक्षराणि स्पष्टं द्रष्टुं कज्ज्वलं मसी वा तदुपरि लिप्यते । ओडिशाप्रान्ते कोमलानां शिम्बपत्रादिरसानां लाक्षारसानां वा उपयोगः क्रियते ।
- बृहत्क्षेत्रफलाकारं लेखं लेखितुं चित्रं वा चित्रयितुं बहूनां ताडपत्राणां परस्परं सीवनेन संयोजनमपि विधीयते ।
- लिखितानां ताडपत्राणां गुच्छमुभयतः समानाकारकाष्ठपट्टिकाद्वयेन संयोज्य सूत्रेण दृढबन्धनं विधीयते ।

**(३) कर्गजमातृकाप्रस्तुतिकरणविधिः -** वस्तुतः इदानीं भारते कर्गजपत्रेष्वेव मातृकाः प्रस्तूयन्ते । अतः संस्कृतभाषासाहित्यस्य मातृकाप्रस्तुतिकरणे समान्येन केचनोपायाः अवलम्बनीयाः भवन्ति । तथा हि -

- विषयनिर्वाचनम् ।
- शीर्षकप्रदानम् ।
- गृहीतविषयं प्राचीनेषु भुर्जपत्रेषु ताडपत्रग्रन्थेषु लिखितं चेत् स्पष्टाक्षरैः देवनागरीलिप्या लिप्यन्तरीकरणम् ।

- संगहीततथ्यानामध्यायानुसारं सज्जीकरणम् ।
- वैज्ञानिकप्रणाल्या प्रस्तुतस्य सन्दर्भस्य कृते मातृकानिर्माणाय स्वतन्त्रं रैखिकं पत्रं (Graph Paper), रैखिकपत्रैः परिसंख्यानात्मकविवरणं (Statistical Report) उल्लिखितुं शक्यते ।
- लिपिकारस्य अक्षराणि स्पष्टानि सुवाच्यानि च भवेयुः ।
- शीर्षकं बृहदाक्षरैः पत्रस्योपरिभागे लेखनीयम् । उपशीर्षकं तु पत्रस्य वामतः लेख्यम् ।
- शीर्षकम्, उपशीर्षकं, ग्रन्थकर्त्तुः नाम, प्रधानां काञ्चित् पङ्क्ति वा स्पष्टीकर्त्तुं वर्णलेखन्याः (Colour Pen) उपयोगः कर्त्तुं शक्यते ।
- आवश्यकस्थले मातृकाः Type Machine द्वारा संगणकयन्त्रComputer द्वारा वा उट्टङ्किताः भवेयुः । टङ्कणमपि स्वच्छं स्यात् ।

कर्गजपत्रस्य एकस्मिन् पार्श्वे टङ्कणं सुन्दरतामावहति । सामान्यतः A/4 इत्याकारकं पत्रं टङ्कणाय स्वीकरणीयम्। पत्रस्य पार्श्वभागाः (Margins) वामतः 1.5 Inch, दक्षिणतः 1 Inch, उपरि 1 Inch, अधः 1 Inch च त्यक्तव्याः ।

- पत्रस्य वामतः पार्श्वभागः बन्धनार्थम् (Binding)अधिकं त्यज्यते इति ज्ञातव्यम् ।
- प्रति पृष्ठं पृष्ठासंख्या स्पष्टमुल्लेखनीया ।
- भूमिकाभागः 'क' 'ख' 'ग' इत्यादिक्रमेण 'I' 'II' 'III' इत्यादिभिः रोमीयलिपिभिः वा उल्लेखनीयः ।
- ग्रन्थस्य मूलभागः उपसंहारं यावत् क्रमानुसारं संख्याभिः सूचनीयम्।
- मातृकायां विविधभाषाविभागः अस्ति चेत् स्वतन्त्रपत्रेषु सूचनीयः । यथा-संस्कृतविभागः, हिन्दीभाषाविभागः, ENGLISH SECTION वेति। - स्वच्छतया पृष्ठसंपादने ( Pagination ) मुद्रणाय सौकर्यं भवति। तत्रापि पृष्ठसंख्या सर्वजनबोधाय आङ्ग्लभाषया भवेत् । अनेन कदाचित् संस्कृतभाषाऽनभिज्ञः मुद्रणकार्यकर्त्ता संस्कृतभाषयालिखितानां पृष्ठानां सज्जीकरणे कष्टं नानुभूयेत ।

- मातृकालेखनसमये संदिग्धस्थले प्रथमम् अङ्कन्या ( Pencil ) लेखनीयम्, ततः मुद्रणालयं प्रति प्रदानात्पूर्वं सम्यक् विचार्य संशोधनं विधाय च शुद्धरूपेण लेखन्या ( Pen ) लेखनीयम् ।
- कदाचित् अपेक्षितोऽपि अंशः मातृकायां योजनीयश्चेत् '* ' - तारकादिभिः ( Star Marks ) चिह्नैः यथास्थानं सूचनीयम् ।
- मातृकां संपाद्य सम्पादकः लेखस्याधः हस्ताक्षरं कुर्यात् । तत्र रचनाकालोऽपि सूचनीयः। तेन मातृकायाः ऐतिहासिकं मूल्यं वर्द्धते। मातृकाकर्त्तुः स्वाक्षरेण मातृकायाः प्रामाणिकताऽपि स्वीक्रियते ।
- देवनागरीलिप्या हस्तलिखितमातृकायाः कृते रेखाङ्कितपत्राणि उपयुक्तानि भवन्ति ।

## तांडपत्रमातृकासम्पादने शोधकर्त्तुः कर्त्तव्यम्

( Duties and care of a researcher during the editing of a palm-leaf Manuscript . ) -

भारतवर्षे ताडपत्रमातृकाणां वैविध्यं दृश्यते । तत्र काव्यानि , आयुर्वेदः, इतिहासपुराणादीनि, धार्मिकविषयाः, तन्त्रशास्त्रं, ज्यौतिषं, शिल्पशास्त्रं, गणितं, विविधाः कलाः, अनेकशास्त्रसम्बद्धाश्च ताडपत्रमातृकाः समुपलभ्यन्ते । १९८८-९० ईशवीयकालावधौ इण्टेक ( INTACH ) संस्थायाः पक्षतः ताडपत्रमातृकाणां सर्वेक्षणं कृतमासीत्। तदनुसारं भारतवर्षे पञ्चाशतलक्ष्यपरिमिताः ताडपत्रमातृकाः भवन्ति। एतेषु संस्कृतसंबद्धाः ६७ % सन्ति [१]। अन्यभारतीयभाषासम्बद्धाः

१. संस्कृतसम्भाषणसन्देशः (मासिकी पत्रिका ) - जून् - २००३, वेङ्गलूरु ।

२५ % अरेविक्-पर्शियन्-तिबेटनादिसम्बद्धाः ८ % च सन्ति । एतेषां ताडग्रन्थानां संग्रहणं संरक्षणं च सम्यक् भवेत् । तत्र ताडपत्रमातृकाणां सम्पादने शोधकर्त्तुः कर्त्तव्यं निम्नलिखितरूपेण विचारयितुं शक्यते । तथा हि-

- शोधविषयसम्बद्धितानां ताडपत्रमातृकाणां संग्रहणम् ।
- तासाम् आवृत्तमुद्रणं ( Rotograph ) अथवा सूक्ष्मचित्रं ( Microfilm) चित्रप्रतयः ( Photocopies ) वा विधातव्यानि ।
- ताडपत्रमातृकासु ब्राह्मी, खरोष्ठी, ग्रन्थलिपिः, नन्दिनागरी, मोडी, शारदा, तिगलारी - इत्यादयः लिपयः उपयुक्ताः दृश्यन्ते । अतः तासां लिपीनां ज्ञानं सम्पादनीयम् ।
- एतासु लिपिषु प्रान्तीयभाषासु वा लिखितानां ताडपत्रमातृकाणां देवनागरीलिप्या लिप्यन्तरीकरणमावश्यकम् ।
- समुपलब्धताडपत्रमातृकाणां 'क', 'ख', 'ग', - इत्यादिभिः नामकरणेन तुलनात्मकपाठसमीक्षायां सौकर्यं भवेत् ।
- शोधकर्त्ता ताडपत्रमातृकाणां विवरणप्रदानेन सङ्कलितहस्तप्रतीनां वा चयनेन कारणानि प्रदर्श्य भूमिकाभागं लिखेत् ।
- पाठभेदप्रदर्शनपुरःसरं मूलग्रन्थसम्पादनात्मको भागः लेखनीयः ।
- परिष्कृतपाठानां प्रकाशनावसरे निर्द्दिष्टचिह्नानि व्यवहर्त्तव्यानि । यथा-कल्पितपाठान् <> इति सङ्केतेन, बुद्धिपूर्वकं परित्यक्तपाठान् { } इति चिह्नेन, यान्त्रिकदोषाणां च पूरणं [ ] इति चिह्नेन सूचयेत् ।
- मातृकायाः वैशिष्ट्यं परिशील्य उपसंहारभागे लेखनीयम् ।
- ग्रन्थसंपादनविधयः अनुसरणीयाः ।
- विविधकोशग्रन्थानां विदुषां च सहायता स्वीकरणीया ।

***

# तृतीयपरिच्छेदः

**भाषान्तरीकरणं किम्?** ( What is Translation ? ) -

भावप्रकटनार्थं प्रयुक्तेषु उपायेषु भाषा प्रमुखस्थानमावहति । एकया भाषया प्रकटितः भावः अपरया भाषया यदा प्रकाश्यते, तदा भाषान्तीकरणमुच्यते । एकस्याः भाषायाः भाषान्तरेण प्रकाशनं नाम भाषान्तरीकरणमित्यर्थः । भाषायाः परिवर्त्तनं नाम भाषान्तरीकरणमिति वा । भाषान्तरीकरणे कदाचित् अक्षरशः परिवर्त्तनं कदाचित् भावस्य परिवर्त्तनं वा विधीयते । अतः पूर्वकथितस्य भाषान्तरेणानुकथनं नाम 'अनुवादः' इत्यपि कथ्यते । तत्रापि अक्षरानुवादः भावानुवादो वा भाषासाहित्यपरिसरे परिदृश्यते । समीक्षकाणां मतानुसारं प्रायः अष्टादशशतके भाषान्तरीकरणस्य प्रविधिविषये आलोचना प्रारब्धा । विदुषामालोचनानुसारं भाषान्तरीकरणस्य केचन नियमाः भवेयुः ।

तथा हि -

१. भाषान्तरीकरणे मूलरचनायाः संपूर्णा भावधारा यथार्थतः प्रकाशिता भवेत् ।
२. अनुवादशैली मूलरचनानुसारिणी भवेत् । विदग्धः पाठकः अनुवादं पठित्वा मूलरचयितुः भाषामिवावगच्छेत् ।
३. मूलरचनावत् भाषान्तरीकरणे सरलताऽपि स्यात् ।
४. अनुवादः मूलरचनायाः साक्षात् प्रतिकृतिः भवेत् ।
५. अनुवादे मूलरचनायाः कश्चिदंशः न त्याज्यः, परिवर्त्तनीयः अथवा तत्र नूतनांशः नैव योजनीयः ।

६. अनुवादे पारिभाषिकशब्दानां यथोचितं सन्निवेशनं स्यात् ।

७. संस्कृतभाषासाहित्यक्षेत्रे विविधार्थकशब्दानामनुवादसमये प्रकरणपर्यालोचनया अपेक्षितमर्थं स्वीकृत्य भाषान्तरीकरणं विधेयम् । अन्यथा मूलरचयितुः अभिप्रायः बाधितः स्यात् ।

अनुवादकलायाः ज्ञानार्जनाय T. H. Savory महोदयस्य The art of Translation इति पुस्तकं, Woodhouselee महोदयस्य Essay on the Principles of Translation इति पुस्तकं वा पठितुं शक्यते।अनेके भाषाविदः अपि अनुवादकलाविषये बहुविधशोधनिबन्धान् प्रकाशितवन्तः। शोधकर्त्ता तेषां तेषां निबन्धानामध्ययनेन अनुवादकौशलं सर्वथा अर्जयेत्। भाषासाहित्यस्य व्यापकप्रचाराय अनुवादस्य महत्त्वं युगे युगेऽनुभूयते। यदि महाकविकालिदासविरचितस्य 'अभिज्ञानशाकुन्तलम्' इति नाटकस्य जर्मनभाषानुवादः न स्यात्, तर्हि तन्नाटकमद्य विश्वप्रसिद्धं न भवेत्, न वा कालिदासः विश्वसाहित्येतिहासे परिचितः स्यात् । अनुवादसाहित्यमपि भाषासाहित्यभाण्डागारं परिबर्द्धयति इति तत्र अवश्यं प्रवर्त्तनीयम् । परन्तु अनुवादकस्य कर्त्तव्यबोधः भाषान्तरीकरणं सरसीकरोति । अतः अनुवादकस्य कर्त्तव्यबोधविषये संक्षेपतः आलोच्यते-

I. अनुवादकः उभयभाषाप्रवीणः भवेत् । भाषाज्ञानाभावादनुवादः विकृतः स्यात् । तस्मात् पारिभाषिकशब्दानां ज्ञानाय कोशग्रन्थानामध्ययनेन च अनुवादकः स्वभाषादक्षतामर्जयेत् ।

I I. भाषाज्ञानार्जने केवलं कोशगतः अर्थः न पर्याप्तः , अपि तु व्यावहारिकः अर्थः अनुवादकेन ज्ञातव्यः ।

I I I. संस्कृतभाषायाः अनुवादकः बहुशास्त्रविद् भवेत् । कारणं संस्कृतभाषायाः क्षेत्रं सुविस्तृतं वर्त्तते । शास्त्रान्तराणां रहस्यं ज्ञात्वा एव अनुवादः सहजतया कर्त्तुं शक्यः ।

IV. अनुवादकः यस्याः भाषायाः अनुवादं कर्त्तुमिच्छति, तस्याः भाषायाः लोकव्यवहारपरिसरः समाकलनीयः । विवधप्रान्तेषु विविधां समाजिकीं रीतिमाश्रित्य विविधाः प्रथाः प्रचलन्ति । तत्तत्साहित्ये तास्ताः परंपराः नितरां प्रतिफलिताः भवन्ति । अतः अनुवादकः तत्रत्यां संस्कृतिं परंपरां च ज्ञात्वा तदनुगुणतया सरसमनुवादं कर्त्तुं शक्नुयात् ।

V. अनुवादकस्य अनुवादविषये श्रद्धा, स्वीकृतभाषायां प्रीतिश्च नितरामपेक्ष्यते । भाषाप्रीतिरेव काव्यिकं सौन्दर्यं सृजति, तेन च अनुवादः सरसः भवति ।

VI. अनुवादकः सर्वथा स्वात्मानं विदग्धः पाठकः इति चिन्तयेत् । तेन पाठकदृष्ट्या औचित्यं विचार्य अनुवादं कर्त्तुं पारयति ।

VII. अनुवादकस्य जिज्ञासाप्रवृत्तिः अनुवादं सफलीकरोति । अज्ञातस्य तथ्यस्य तत्त्वानुसन्धानेन परिशील्य भाषान्तरीकरणे त्रुटिः न भवति ।

VIII. अनुवादकोऽपि स्वयं स्रष्टा भवेत् । तेन मूलरचयितुः भावमवगम्य सरसमनूदितुं पारयति ।

IX. मूलरचयितुः दोषसंशोधनमनुवादकस्य कार्यं न भवति ।

X. अनुवादकः कदापि स्वपाण्डित्यं प्रदर्शयितुं मूलरचनामतिक्रामेत् ।

XI. अनुवादकः यथाशक्ति मूलरचनायाः अपरिवर्त्तनेन शाब्दिकमनुवादं विदधाति चेत्, मूललेखक इव गौरवं प्राप्नोति । किञ्चानुवादकः कदापि मूललेखकस्य समकक्षः न भवति, कारणं परवर्त्तिनि काले अन्यः कोऽपि नवीनं सरसं चानुवादं कुर्यात् । एवं परंपरया कदाचिदनुवादग्रन्थाः कालगर्भे विलीनाः स्युः, परन्तु मूललेखकस्य मूलरचना सहृदयहृदयमधितिष्ठति । तस्मादनुवादकः निजकार्यपरिसरं परिज्ञाय स्वकर्त्तव्यं प्रति सचेतनः भवेत् ।

**भाषान्तरीकरणस्य आदर्शरूपाणि** ( Models of Translation ) - सुविस्तृते संस्कृतसाहित्ये भाषान्तरीकरणस्य बहुविधानि आदर्शरूपाणि इदानीं दृश्यन्ते । तेषु प्रायः भावानुवादः अधिकः । उदाहरणार्थं महाकवेः कालिदासस्य रचनाः स्वीकर्त्तुं शक्यन्ते । कालिदासस्य सर्वासु रचनासु श्रेष्ठः ग्रन्थः 'अभिज्ञानशाकुन्तलम् ' । १७८८ क्रिस्तोः वत्सरे अगस्तमासस्य १७ दिनाङ्के पण्डितरामलोचनस्य साहाय्येन ' उइलियम् जोनस् ' महोदयेन लाटिन्भाषायामनूदितस्य शाकुन्तलस्य आङ्ग्लभाषानुवादः पुस्तकाकारेण प्रकाशितः । तदानीं समग्रेऽपि यूरोपमहादेशे अनुवादस्यास्य चर्च्चा प्राचलत् । १७९१ क्रिस्तोः वत्सरे जर्जफोष्टर (George Foster ) महोदयः जर्मनभाषायामनूदितवान् । क्रमशः फरासी-डच्-सुइडेन्-डेनिस्-प्रभृतिषु भाषासु अभिज्ञान-शाकुन्तलस्यानुवादः प्रस्तुतः ।

किं बहूना ? अभिज्ञानशाकुन्तलस्य पठनेन उलप्याङ्ग उन गेटे ( Woofang von Goethe ) महोदयः यदभिमतं जर्मनभाषायां प्रकटितवान्, तस्यापि आङ्ग्लानुवादः E. B. Eastwick महोदयेन कृतः । तदनन्तरं रविदत्तः पुनश्च आङ्ग्लभाषायां तदनुवादं विहितवान्। ततः परं ताराकुमार कविरत्नं तस्य एव आङ्ग्लानुवादस्य सुललितं संस्कृतानुवादं कृतवान्। यथा -

"वासन्तं कुसुमं फलं च युगपत् ग्रीष्मस्य सर्वं च यत्
यच्चान्यन्मनसोरसायनमतो सन्तर्पणं मोहनम् ।
एकीभूतमभूतपूर्वमथवा स्वर्लोकभूलोकयो-
रैश्वर्यं यदि वाञ्छसि प्रिय सखे शाकुन्तलं सेव्यताम् ।।"

अपि च संस्कृतभाषातः ओडिआभाषानुवादः बहुधा दृश्यते । मेघदूतस्य

उत्कलपद्यानुवादः **राधानाथराय**महोदयेन ततः **राधामोहनगडनायक-**महोदयेनापि कृतो दृश्यते । एवमपि इदानीं विविधप्रान्तीयसाहित्यस्य संस्कृतानुवादः संस्कृतसाहित्यभाण्डागारमभिवर्द्धयति ।

**भाषान्तरीकरणस्य प्रकाराः** ( Types of Translation ) -

भाषान्तरीकरणे अनुवादकस्य दक्षतां विषयवस्तुनः स्पष्टतां च विचार्य समीक्षकाः विविधानामनुवादप्रकाराणां पर्यालोचनां कुर्वन्ति। अस्माभिः पूर्वप्रदर्शितयोः आक्षरिकानुवाद-भावानुवादयोः परंपरा प्रायः परिदृश्यते । अतः प्रमुखरूपेण अनुवादः द्विविधः भवति -

१. आक्षरिकानुवादः ( Translation ) २. अनुकृतिः ( Transcreation) च।

**१. आक्षरिकानुवादः ( Translation )** - एकस्याः भाषायाः भाषान्तरं प्रति अक्षरशः परिवर्त्तनं नाम आक्षरिकानुवादः कथ्यते । संस्कृतभाषायाः व्यापकत्वात् अन्यभाषातः संस्कृतं प्रति आक्षरिकानुवादः कदाचित् संभवति; क्वचिच्च व्युत्पत्तिबलेन अपेक्षितः शब्दः स्वीक्रियते । किन्तु संस्कृतभाषातः भारतीयभाषां प्रति आक्षरिकानुवादः सहजसाध्यः भवति। आक्षरिकानुवादः सर्वदा न सम्भवति । कदाचिदक्षरशः अनुवादेन अनुवादकः महान्तं श्रमं स्वीकरोति । तत्रोदाहरणार्थं २००२ तमे वर्षे राष्ट्रियसंस्कृतविद्यापीठम्,तिरुपतिपक्षतः प्रकाशितः ग्रन्थः " **भारतीयग्रन्थ-संपादनशास्त्रप्रवेशिनी** " इति लभ्यते । अस्य ग्रन्थस्य आङ्ग्लप्रणेता आचार्यः एस. एम्. कत्रे । अनेन महोदयेन आङ्ग्लभाषया **"An Introduction to Indian Textual Criticism"** इति ग्रन्थः प्रणीतः । अस्य संस्कृतेन भाषान्तररचयितारः आचार्यः डॉ. लक्ष्मीनरसिंहभट्टः, डॉ. जा. रामकृष्णः, डॉ. विरूपाक्ष वि. जड्डीपालश्च। ग्रन्थेऽस्मिन् अत्यन्तं सावधानतया परिनिष्ठितार्थक-शब्दार्थचयने महान्तं श्रमं स्वीकृतवन्तः अनुवादकाः । अतः आक्षरिकानुवादस्य सद्यतमः ग्रन्थविशेषोऽयं भवितुमर्हति ।

**२. अनकृतिः (Transcreation) -** मूलग्रन्थस्यानुकरणेन लेखकस्य मौलिकतां प्रति ध्यानं दत्त्वा यत्रानुवादः विधीयते तत्र अनुकृतिरिति कथ्यते । अनुकृतौ यद्यपि मूलरचयितुः प्रतिपाद्यः विषयः अखण्डितः सन् तिष्ठति, तथापि अनुवादकस्य सृजनीशक्तिः प्रतिफलति । भारतीयवाङ्मये नैके ग्रन्था समुपलभ्यन्ते यत्रानुकृतेः वैचित्र्यं विराजते। प्राचीनभारते रामायणादीनां पुराणग्रन्थानां च तत्तत्भारतीयभाषासु अनूदिताः दृश्यन्ते । तत्र मूलग्रन्थस्यानुसरणे मुख्यभावः अवलम्ब्यते । अतः समीक्षकाः एवंभूतस्यानुवादस्य रूपचतुष्टयं परिकल्पयन्ति -

१. भावानुवादः २. छायानुवादः ३. मर्मानुवादः ४. अनुसरणं चेति ।

**१. भावानुवादः -** संप्रति संस्कृतवाङ्मये भावानुवादस्य बाहुल्यं दृश्यते। अत्र मूलरचनायाः कश्चिदपि अंशः न परित्यज्यते, किन्तु भावगतमर्थमाधारीकृत्य अर्थः स्पष्टीक्रियते । संस्कृतपद्यानां व्याख्याने भावानुवादः पाठकमनसि अर्थस्वारस्यं सृजति ।

**२. छायानुवादः -** यथा कस्यचित् छायां विलोक्य कोऽयमित्यनुमातुं शक्यते, किन्तु पूर्णरूपेण छायाद्वारा मूलवस्तुपरिचयः न प्राप्यते ; तथैव छायानुवादः मूलरचनायाः सदृशः । छायया आकारः ज्ञायते, यत्तु अस्पष्टमपि स्पष्टं चित्रं परिकल्पयितुं प्रेरयति । क्वचित् छायानुवादः अनुवादकस्य स्वतन्त्रसृष्टिरित प्रतीयते । कारणं मूलग्रन्थस्य चरित्रादिकं स्वीकृत्य घटनाप्रवाहमवलम्ब्य च अनुवादकः स्वरचनाकौशलेन संक्षिप्ततया कथावस्तु उपस्थापयति । अनेन मूलरचयितुः विषयविशेषमात्रम् अनुवादकस्य सरसलेखनीस्पर्शेण सुरुचिरायते । पाठकाः अनुवादकमेव स्रष्टा इति विचारयन्ति ।

**३. मर्मानुवादः -** संप्रति अत्याधुनिकयुगे समयसङ्कोचादनुवादसाहित्ये सुविस्तृतग्रन्थानां संक्षिप्तरूपः मर्मानुवादरूपेण प्राप्यते । मूलग्रन्थरचयितुः प्रतिपाद्यविषयस्य सारनिर्यासः अनुवादकस्य लक्ष्यं भवति । सुदीर्घं

प्रबन्धं पठितुं संप्रति व्यस्तबहुलजीवने पाठकानामवसरः नास्ति । अतः मर्मानुवादमात्रं पठित्वा पाठस्वारस्यमनुभवितुं पाठकानां समयोचितः आग्रहः अनुवादकैः मर्मानुवादद्वारा सफलीक्रियते । अनेन समयस्य अर्थस्य च सदुपयोगः भवति । मर्मानुवादद्वारा पाठकस... ते अवलुप्तप्रायाणां प्राचीनकाव्यकवितानां समीचीनमुपस्थापनं सुकरं प्रतिभाति ।

**४. अनुसरणम्** - अनुसरणमनुकृतेः स्वतन्त्रं वैशिष्ट्यं प्रतिपादयति। तत्र आक्षरिकानुवादे भाषायाः प्राधान्यम्, भावानुवादे भाषायाः स्थाने भावस्य प्राधान्यम्, छायानुवादे भाषाभावयोः स्थाने अनुवादकस्य रचनाचातुर्यस्य प्रामुख्यम्, अनुसरणे च भाषाभावयोः उभयोः समप्राधान्यं भवतीति ज्ञातव्यम् । आक्षरिकानुवादस्य अनुकृतेश्च समन्वयेन यः अनुवादः विधीयते स तु अनुसरणानुवादः इति कथयितुं शक्यते । अनुसरणे अनुवादकः मूलरचनायाः मुख्यविषयं न परिवर्त्तयति, किन्तु तदुपकारकत्वेन नूतनतथ्यं संयोज्य अनुवादं सरसीकरोति । अतः अनुसरणानुवादे अनुवादकस्य सृजनीशक्तिरपेक्ष्यते । मूलरचनायाः वर्जितविषयः तदनुकूलनूतनतथ्यसन्निवेशेन अनुवादसाहित्ये सरसतया समुपस्थापितः सन् सहृदयहृदयमाह्लादयति ।

भाषान्तरीकरणे एषां विविधरूपाणामनुवादानां सन्दर्भानुसारमावश्यकतानुभूयते । भाषासाहित्यक्षेत्रस्य विकासाय भाषान्तरीकरणं प्रति प्रोत्साहनं सर्वकारीयस्तरेऽपि भवतीत्यानन्दस्य विषयोऽयम् ।

भाषान्तरीकरणे अनुरूपात्मकता पर्याप्तता च परिशीलनीया।

तत्र पारिभाषिकभाषान्तरीकरणे कोशग्रन्थाः, सद्यः प्रकाशिताः पत्रिकाः, शोधपत्रिकाः, आकाशवाणी-दूरदर्शनादयो गणमाध्यमाः वा उपयोक्तुं शक्यन्ते। संगृहीतशब्दावलीनां माध्यमेन पारिभाषिकभाषान्तरीकरणं सुकरं भवति ।

**लिप्यन्तरीकरणे वर्णसङ्केतविधिः** ( Transliteration ) - एकस्यां भाषायां दक्षः गवेषकः यदा अपरासु भाषासु लिखितस्य साहित्यस्य संग्रहणं कुरुते, तदा तत्तत्भाषाणां लिपिज्ञानमपेक्ष्यते । एतदर्थं लिप्यन्तरीकरणस्यावश्यकताऽनुभूयते । यस्मिन् प्रान्ते या भाषा प्रचलति, तस्मिन् प्रान्ते तया एव भाषया लिप्यन्तरीकरणेन साहित्यस्य लोकप्रियता वर्द्धते । संस्कृतभाषातः भारतीयभाषासु लिप्यन्तरीकरणं न तथा कष्टकरम्। एकस्याः भाषायाः उच्चारणानुसारमनुरूपवर्णेषु भाषान्तरेण पुनः प्रकाशनं नाम लिप्यन्तरीकरणं भवति । अतः गवेषकः लिप्यन्तरीकरणविषये यत्नवान् भवेत् । विशेषतः वैदेशिकभाषासु भारतीयभाषाणां लिप्यन्तरीकरणे वर्णोच्चारणप्रक्रियां विचार्य सावधानताऽवलम्बनीया । उदाहरणतः आङ्ग्लभाषायां सीमितवर्णानां प्रयोगकौशलेन संस्कृतभाषायाः लिप्यन्तरीकरणं 'वर्णमाला'पुस्तके यथा-

**स्वरवर्णाः** ( Vowels ) -

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| **अ** | **आ** | **इ** | **ई** | **उ** | **ऊ** | **ऋ** | **ॠ** |
| **a** | **ā** | **i** | **ī** | **u** | **ū** | **ṛ** | **ṝ** |
| **लृ** | **ए** | **ऐ** | **ओ** | **औ** | **अं** | **अः** | |
| **ḷ** | **e** | **ai** | **o** | **au** | **aṃ** | **aḥ** | |
| | | | | | अनुस्वारः | विसर्गः | |

**व्यञ्जनवर्णाः** ( Consonant ) -

| | | | | |
|---|---|---|---|---|
| **क** | **ख** | **ग** | **घ** | **ङ** |
| **ka** | **kha** | **ga** | **gha** | **ṅa** |
| **च** | **छ** | **ज** | **झ** | **ञ** |
| **ca** | **cha** | **ja** | **jha** | **ña** |
| **ट** | **ठ** | **ड** | **ढ** | **ण** |
| **ṭa** | **ṭha** | **ḍa** | **ḍha** | **ṇa** |
| **त** | **थ** | **द** | **ध** | **न** |
| **ta** | **tha** | **da** | **dha** | **na** |
| **प** | **फ** | **ब** | **भ** | **म** |
| **pa** | **pha** | **ba** | **bha** | **ma** |
| **य** | **र** | **ल** | **व** | |
| **ya** | **ra** | **la** | **va** | |
| **श** | **ष** | **स** | **ह** | |
| **śa** | **ṣa** | **sa** | **ha** | |

| | | | | | |
|---|---|---|---|---|---|
| Semi Vowels - | **य** | **र** | **ल** | **व** | |
| | **Y** | **r** | **i** | **v** | |
| Spirants - | **श** | **ष** | **स** | **ह** | **क्ष** |
| | **S** | **s** | **s** | **h** | **Ks** |

पाठकानां कृते मूलग्रन्थस्य तथ्यविश्लेषणाय गवेषकः ग्रन्थटिप्पण्यामपेक्षितांशस्य लिप्यन्तरीकरणेन उद्धरति । प्रायः आङ्ग्लभाषया रचितेषु प्रबन्धेषु ताभिरक्षरैः संस्कृतभाषायाः मूलग्रन्थांशः प्रदीयते । अनेन देवनागरीलिपिमजानन्तोऽपि पाठकाः आङ्ग्ललिप्यां पाठस्वारस्यमनुभवन्ति । उदाहरणार्थं यथा -

" Concept of Dhvani in Sanskrit Poeitics " इति आचार्य

आनन्दवर्द्धनप्रणीतस्य ध्वन्यालोकस्य मधुसूदनमिश्रविरचितायाः अवधानटीकायाः समीक्षात्मके ग्रन्थे आङ्ग्ललिप्यां ध्वन्यालोकस्य कारिका यथा -

> **"Yatrārtha śabdo vā tamarthamupasarjanīkṛtasvarthau**
> **Vyaṅkta Kāvyaviseṣaḥ sa dhvaniriti sūribhiḥkathitaḥ".**
>
> —*Dhvanyāloka* 1/13

वस्तुतः यदा वैदेशिकाः संस्कृतविद्वांसः संस्कृतग्रन्थानामुपरि गवेषणां प्रारब्धवन्तस्तदा लिप्यन्तरीकरणस्य प्रयोजनीयता तैरनुभूता। अतः शोधक्षेत्रे लिप्यन्तरीकरणप्रक्रिया इदानीमपि चलति । लिप्यन्तरीकरणे गवेषकः अपेक्षानुसारं स्वतन्त्रचिन्तनस्य व्यवहारं कुर्यात्। यदा देवनागरीलिप्याः रोमीयवर्णेषु लिप्यनतरीकरणं क्रियते, तदा स्वतन्त्रचिह्नव्यवहारः करणीयः । उच्चारणे शुद्धतानिमित्तमपि तीव्रबलाघातः (।), दीर्घचिह्नं (-), विन्दु(.)प्रभृतयश्च व्यवहरणीयाः।

***

# चतुर्थपरिच्छेदः

**समीक्षात्मकग्रन्थसम्पादनप्रविधिः** ( Method of Critical Edition ) -

प्राचीनकाले गुरुशिष्यपरंपरया विद्या सुरक्षिताऽसीत् । लेखनकौशलस्य अभावात् गुरुकुलेषु गुरूणां मुखतः शिष्याः वेदवाक्यं श्रुत्वा ज्ञानार्जनं कुर्वन्ति स्म । अतः वेदस्यापरं नाम श्रुतिरिति। श्रवणस्मरणयोः परम्परायां बहुकालं यावत् राष्ट्रेऽस्मिन् सुरक्षिता विद्या प्रायः क्रिस्तोः पूर्वं पञ्चमशताब्द्यां लेखनपद्धतौ अन्तर्भूता । क्रमशः प्रस्तरगात्रेषु, ताम्रफलकेषु, भुर्जपत्रेषु, काष्ठफलकेषु, कार्पासपट्टवस्त्रेषु, पशुचर्मसु च लिपिकारैः अनुशासनानि धर्मशास्त्राणि वा लिखितानि । कालक्रमेण मूलग्रन्थानां नष्टप्रायत्वात् लिपिकाराणां वा असावधानतावशतः ताडपत्रग्रन्थेषु भुर्जपत्रग्रन्थेषु वा पाठविकृतयः सञ्जाताः । किञ्च कीटदंष्ट्रत्वात् वन्यावात्यादिकारणतोऽपि पाठविकृतयः भवन्ति । मुद्रणयन्त्रस्य उद्भावनात् प्राचीनग्रन्थानां प्रकाशनाय सर्वे तत्पराः दृश्यन्ते। अतः विविधोपायैः संगृहीतस्य प्राचीनग्रन्थस्य शुद्धपाठनिर्णयार्थं गवेषणा विधीयते । समीक्षादृष्ट्या मूलपाठानुसन्धानेन ग्रन्थसम्पादनं समीक्षणात्मकशोधकार्यस्य प्रमुखं प्रयोजनं भवति । यत्र मूलग्रन्थः नोपलभ्यते, तत्र समुचितपाठानुसन्धानेन मूलग्रन्थस्य स्वरूपनिर्द्धारणाय प्रयासः विधेयः । इदानीन्तनयुगे वैज्ञानिकदृष्ट्या गवेषकाः मूलपाठनिर्णये प्रवृत्ताः भवन्ति । अत्र समीक्षात्मकग्रन्थसम्पादने मूलग्रन्थस्य स्वरूपोपलब्धिः प्रमुखमुद्देश्यं भवति । S. M. कत्रेमहोदयस्य

" An Introduction to Indian Textual Criticism " इत्याख्यस्य ग्रन्थस्य संस्कृतानुवादरूपं " भारतीय-ग्रन्थसम्पादनशास्त्रप्रवेशिनी " इति ग्रन्थं परिशील्य ज्ञायते यत् पाठसमालोचनात्मकसम्पादने काश्चन सूचनाः गवेषकैः स्मरणीयाः । तत्र समीक्षात्मकसम्पादनात् प्राक् सामग्रीसङ्कलनमपरिहार्यं भवति । ततः पाठचयनं करणीयम् । ततः पाठे विद्यमानानामनुपादेयांशानां बहिष्करणं विधातव्यम् । अन्ते विचारविश्लेषणेन मूलपाठनिर्णयः विधीयते ।

**मूलपाठनिर्णयस्य उत्साः -** शुद्धपाठनिर्णय एव मातृकासम्पादनस्य प्रमुखं लक्ष्यं भवतीत्यतः शोधकर्त्ता मूलग्रन्थस्य एकाधिकान् प्रतिलिपिविशेषान् संगृह्णाति । मातृकाः साधारणतः द्विविधाः भवन्ति। ग्रन्थकर्त्तुः स्वहस्तलिखिताः, लिपिकारेण प्रतिलिपिकृताश्च । शोधकर्त्ता मातृकासंग्रहणे किम्भूतां मातृकां प्राप्तवान् इति सूचयेत् । ग्रन्थलेखकस्य स्वहस्तलिखिता पाण्डुलिपिः यदि लभ्यते, तदा सम्पादनस्य तथा क्लेशः नानुभूयते । तदुपरि विचारविश्लेषणमात्रमपेक्ष्यते । अतः पाण्डुलिपिसंग्रहणस्योत्साः वर्णनीयाः । कदाचित् मूललेखस्य उत्तराधिकारिणां सकाशात् , पुस्तकालयतः, संग्रहालयतः, व्यक्तिविशेषतो वा पाण्डुलिपयः प्राप्यन्ते।

विशेषतः संस्कृतपाण्डुलिपयः मठमन्दिरेषु, प्राचीनग्रन्थालयेषु, प्राचीनपण्डितानां गृहेषु, राजगृहेषु, सम्भ्रान्तपरिवारेषु, ग्राममुख्येषु, संग्रहालयेषु च समुपलभ्यन्ते । शोधकर्त्ता पाण्डुलिपीनां पुष्पिकां ( Colophone ) अवलम्ब्य ग्रन्थकारस्य परिचयं रचनाकालादिकं च ज्ञात्वा अन्यतथ्यसंग्रहणाय अपि उत्सं प्राप्नोति ।

एकामेव पाण्डुलिपिं प्राप्य मातृकासम्पादनं नैव कर्त्तुं शक्यते। अतः उपरिवर्णितानि उपलब्धिस्थानानि प्रति गवेषकः यत्नवान् भवेत्। यदि पाण्डुलिपिः लिपिकारेण प्रतिलिपिकृता, तर्हि मूलपाठ-निर्णयार्थमवश्यमेव अन्येषामधिकाधिकानां पाण्डुलिपीनामन्वेषणं करणीयम् । मूलग्रन्थस्य नानाव्याख्यानानि समुपलभ्यन्ते चेत् तुलनां विधाय पाठसमीक्षा कर्त्तव्या। अधिकाधिकानां पाण्डुलिपीनां प्राप्तौ वर्गीकरणं विधेयम् । मूलग्रन्थप्रणेतुः देशकालादिविचारः मातृकासम्पादने अवश्यं स्यात् । मातृकायां लिपिकारस्य नाम उल्लिखतं चेत् तदपि ग्रान्थिकपर्यालोचनान्ते सूचनीयमेव ।

**सामग्रीसङ्कलनम्** - शुद्धपाठनिर्णयविधौ गवेषकः प्रथमं सामग्रीसङ्कलनं कुर्यात् । सामग्रीति कथनेन ताडपत्रे लिखितानां कर्गजपत्रे प्रतिलिपिकृतानां वा मातृकाणां संग्रहणमवगन्तव्यम् । यदि मातृकायाः क्वचित् मुद्रितपुस्तिकाकारेणोपलब्धिः सम्भवति, तदा तस्य प्रकाशनकालादिसूचना भवेत् । मुद्रितपुस्तकेऽपि अशुद्धयः भवितुमर्हन्ति। अतः मुद्रितपुस्तकेन सह अप्रकाशितप्राचीनपाण्डुलिपीनां तुलनात्मकमध्ययनं कर्त्तुं शक्यते । आदौ मातृकाः संगृह्य तासां सङ्केतात्मकं नामकरणं करणीयम् । तत्र क - १०, ख - १२, ग - १६, घ - १८ इत्यादिभिः सूचनया स्पष्टं ज्ञायते यत् 'क' - मातृका दशमशताब्द्यां, 'ख' - मातृका द्वादशशताब्द्यां, 'ग' - मातृका षोडशशताब्द्यां 'घ' - मातृका अष्टादशशताब्द्यां च विरचिताः इति । शोधकर्त्ता प्रथमं मातृकाः पठित्वा स्वसूक्ष्मबुद्ध्या यस्याः रचनायाः विश्वसनीयतामनुभवति, तामेव प्रमुखमातृकारूपेण अङ्गीकरोति । प्रमुखमातृकायाः अवलम्बनेन अन्यासां पाठानुसन्धानं सहजं भवति । अतः मातृकासंपादने सामग्रीसङ्कलनं प्रति गवेषकः सचेतनः भवेत् ।

**पाठचयनम्** - यदा बहुविधाः मातृकाः समुपलभ्यन्ते, तदा समुपयुक्तस्य पाठस्य चयनं मातृकासम्पादकस्य गुरुत्वपूर्णं दायित्वं भवति । अतः मातृकासम्पादकः गवेषकः मातृकाः सम्यक् पठित्वा तत्र समुपलब्धस्य तथ्यस्य परीक्षणेन अत्यन्तं विश्वसनीयं पाठं स्वीकर्त्तुं शक्नोति । कदाचित् कस्यांचित् मातृकायां कस्यचित् पदस्य अधिकपाठोऽपि दृश्यते । तत्र पाठभेदः इति स्पष्टमुल्लेखनीयं भवति । क्वचित् कीटदंष्ट्रत्वात् पाठविलुप्तिः दृश्यते चेदपि विद्वान् गवेषकः प्रसङ्गानुसारं समुपयुक्तस्य पदस्यापि संयोजनं कर्त्तुं शक्नोति । परन्तु 'अयमंशः मूलमातृकायां न दृश्यते' इति स्पष्टमुल्लिखेत् ।

पाठचयने गवेषकस्य द्रढीयानात्मप्रत्ययः भवेद्यत् संगृहीतानां मातृकाणां मूलरचनायाः शुद्धपाठनिर्णये सहायकत्वं सिद्ध्यतीति ।

**पाठसंशोधनम्** - मातृकासु अविश्वसनीयस्य पाठांशस्य बहिष्करणेन समुचितपाठस्य संयोजनेन च पाठसंशोधनं भवति । प्रतिलिपिभूतानां मातृकाणां प्रसङ्गबहिर्भूताः विषयाः सुतरां बहिष्करणीयाः । प्रतिलिपिकृतासु मातृकासु ये भ्रमाः भवन्ति, ते तु समीक्षकस्य 'हाल'महोदयस्य ( Hall) मतानुसारं त्रिविधाः। यथा -

( I ) पाठभ्रान्तयः । ( II ) लोपाः । ( III ) प्रक्षेपाः इति च ।

**( I ) पाठभ्रान्तयस्तथा तत्परिहारोपायाः -**

( 1 ) सदृशाक्षराणां तथा मात्राणां च विषये भ्रान्तिः ।

( 2 ) साधारणसादृश्येन पदानां विकृततया लेखनम् ।

( 3 ) संक्षिप्तानां विकृततया व्याख्यानम् ।

( 4 ) अपयोजनम् ( Wrong Combination ) अपविभजनम् ( Wrong Separation ) वा ।

(5) पार्श्वतनपदानां योजनं तेषां व्यवस्थापनं च ।

(6) वर्ण-पद-वाक्यानां स्थानव्यत्ययः । वाक्यानां पाठभागानां पृष्ठानां च स्थानभङ्गः ।

(7) संस्कृतलेखकानां प्राकृते तथा प्रान्तीयभाषासु विकृततया तद्वैपरीत्ये च लेखनम् ।

(8) उच्चारणजन्या दोषाः ।

(9) संख्यानां विषये भ्रान्तिः ।

(10) संज्ञाशब्दानां विषये भ्रान्तिः ।

(11) अविज्ञातपदानां विज्ञातपदानां समानार्थकपदानां वा प्रतिनिधिकरणम्।

(12) प्राचीनाक्षरस्थाने नूतनाक्षरविन्यासः ।

(13) अनवधानजन्यदोषाणां परिष्करणयत्नाः प्रक्षेपा वा ।

**(II) लोपाः -**

(14) सदृशाक्षरलोपः । समानरीत्याऽऽरभ्यमाणानां समाप्यमानानां वा पदानां तथा मात्राणां च लोपाः ।

(15) लोपः । यः कश्चित् साधारणलोपः ।

**(III) प्रक्षेपाः -**

(16) पार्श्वे समीपतरे च स्थितस्य पाठांशस्य पुनर्लेखनम् ।

(17) पङ्क्तिद्वयमध्ये उपान्ते वा दृश्यमानानां वा विवरणानां टीप्पणीनां वा मध्ये योजनम् ।

(18) मिश्रपाठान्तराणि ।

(19) सजातीयलेखनानां प्रभावेण क्रियमाणान्यधिकपाठसंयोजनानि (प्रक्षेपाः) ।

सामान्यतः संस्कृतमातृकासंपादनसमये देवनागरीलिपिषु **स** स्थाने **म**, **म** स्थाने **स**, **त** स्थाने **उ**, **व** स्थाने **उ**, **थ** स्थाने **ष**, **व** स्थाने **व्य**, **च्य** स्थाने **श्य**, **च्च** स्थाने **श्च**, **ष्य** स्थाने **ष्ट** इत्यादयः वर्णव्यतिक्रमाः भवितुमर्हन्ति । एतेषामक्षराणां प्रयोगस्थले गवेषकः सावधानतया मूलमातृकायाः प्रसङ्ग्गमनतिक्रम्य शुद्धं पाठं निरूपयेत्।

**विचारविश्लेषणम्** - गवेषणाक्षेत्रे मातृकासम्पादने विचारविश्लेषणं किञ्चित् उच्चतरमालोचनमिति कथ्यते । रचनायाः ऐतिह्यं, साहित्यिकं च मूल्यबोधमाधारीकृत्य पाठसमीक्षायाः युक्तियुक्तता अत्र विचार्यते । संस्कृतग्रन्थसम्पादनायां ग्रन्थकारस्य तथा ग्रन्थस्य विषये प्रामाणिकं तथ्यं विचारयेत् । ग्रन्थकारस्य इतरान् ग्रन्थान् सूचयेत् । संस्कृतसाहित्ये ग्रन्थकारस्य तद्ग्रन्थस्य वा स्थाननिरूपणं कुर्यात् । सर्वतो दृष्ट्या गवेषकः सम्पादितग्रन्थस्य वैशिष्ट्यमालोचयेत् । सांप्रतिकयुगे संपादितग्रन्थस्य सहृदयसमाजे उपयोगितां च विचार्य मूलपाठनिर्णयस्य क्लेशं कथंकारं समधिगतवान् इति सर्वं पर्यालोचयेत् ।

**मुद्रणसंशोधनस्य प्रविधिः** - मातृकाणां पुस्तकाकारेण प्रकाशनावसरे मुद्रणसंशोधनप्रविधेः ज्ञानं नितरामावश्यकम् । भारतवर्षे मुद्रणयन्त्रद्वारा मातृकाणां ग्रन्थाकारेण प्रकाशनं तु अष्टादशशताब्द्यां [१] जातम् । तदानीं मुद्रणसंशोधनाय ये केचन सङ्केताः व्यवहृताः, इदानीं संगणकयुगे तेषां बहुपरिवर्त्तनं परिलक्ष्यते । तत्र मुद्रणसंशोधनाय अपेक्षितं ज्ञानं ग्रन्थसंपादकस्य यथा भवेत् ; तदनुरूपं मुद्रणकार्यकर्त्तुः अक्षरसंयोजकस्य वा स्यात् । पुस्तकस्याकारानुसारं पृष्ठासंख्या, मुख्यशीर्षकं, उपशीर्षकं

---

१. Manuscriptology, page - 163. K. Maheswaran Nair.

च विविधाकारविशिष्टाक्षरैः योजनीयानि । एतदर्थं ग्रन्थसंपादकः अक्षरसंयोजकाय संसूचयेत् । अक्षरसंयोजनसमये ये केचन दोषाः भवेयुः, तेषां संशोधनाय प्रथमसंशोधनपत्रं संपादकः पश्येत् । संशोधनसमये ग्रन्थसंपादकः रक्तवर्णोपेतां लेखनीं व्यवहरेत् । तत्र मुद्रणसंशोधनाय अधोलिखिताः सङ्केताः व्यवह्रियन्ते -

d/ - अनावश्यकं पदमिदं / अक्षरं / चिह्नं निष्कासयतु ।
(d)/ - निष्कास्य मेलयतु ।
⌒/ - मेलयतु ।
# - पृथक्करोतु ।
⊏/ - वामतः स्थापयतु ।
⊐/ - दक्षिणतः स्थापयतु ।
2/ - निरन्तरं चलतु । नूतनः अनुच्छेदः नास्ति ।
6/ - N. P. / अत्र नूतनः अनुच्छेदः अस्ति ।
= - अक्षराणि समानाकारकाणि भवन्तु ।
|| - पङ्क्तिः समाना भवतु ।
∠∠ - रेखाङ्कितं भागं वक्राक्षरैः ( *Italic* ) स्थापयतु ।
∠ - शब्दानां मध्ये यथायोग्यं शून्यस्थानं ( Space ) स्थापयतु ।
≠ - शून्यस्थानं ( Space ) न्यूनीकरोतु ।
≠≠ - शून्यस्थानं ( Space ) वर्द्धयतु ।
;∠ - अर्द्धविरामचिह्नं योजयतु ।
( )∠ - कोष्ठकं योजयतु ।
(:)∠ - विसर्गं योजयतु ।
(.)∠ - विरामचिह्नं योजयतु ।

(!)⁄ - विस्मयादिबोधकं योजयतु ।

-⁄ - समासचिह्नं स्थापयतु ।

⌐⌐⁄ - अधः स्थापयतु ।

⌐⌐⁄ - उपरि स्थापयतु ।

δ - स्थूलाक्षरैः परिवर्त्तयतु ।

ρ - सूक्ष्माक्षरैः परिवर्त्तयतु ।

?⁄ - प्रश्नवाचकचिह्नं व्यवहरतु ।

※ - मूलपाण्डुलिपिं पश्यतु ।

सारांशतः इदं वक्तुं शक्यते यत् मुद्रणसंशोधनं नाम काचित् विशिष्टा कला भवति । एतदर्थं गवेषकस्य विविधकर्गजपत्राणामाकारज्ञानं भवेत् । अद्यतनसंगणकयुगे देवनागरीलिपिकृते व्यवहृतानां मृदुतन्त्रीणां ( Software ) ज्ञानमपि परमावश्यकम् । मुद्रणसंशोधनस्य मानकचिह्नानां व्यावहारिकं ज्ञानमपरिहार्यं भवति । सैद्धान्तिकज्ञानार्ज्जनेन सह गवेषकः मुद्रणालयेषु गत्वा मुद्रणसंशोधनकर्मरतानां साहाय्येन प्रायोगिकमभ्यासं कुर्य्यात् । मुद्रणसंशोधनसमये निम्नलिखितेषु विषयेषु गवेषकः दत्तावधानः स्यात् -

- संशोधनं क्रमशः करणीयम् ।
- संशोधनसमये अक्षराणि स्पष्टानि भवेयुः ।
- एकः शब्दः एकस्यां पङ्क्त्यां लेखनीयः । इतस्ततः लेखनेन अक्षरसंयोजकस्य भ्रमः जायते । यथा 'दशरथः' इति शब्दस्य एकत्र 'दश' अन्यत्र 'रथः' इति च लेखनेनाशुद्धिरेव भवति।
- कस्याप्यनुच्छेदस्य प्रथमा पङ्क्तिः कस्यचित्पृष्ठस्यान्तिमे न भवेत् । तथैव अन्तिमा पङ्क्तिरपि कस्यापि पृष्ठस्यारम्भे न स्यात् । प्रतिपृष्ठं प्रायः पङ्क्तिसंख्या समाना भवेत् ।

- संस्कृतपुस्तकानां मुद्रणसंशोधनाऽवसरे सामान्यतः निम्नलिखित-वर्णेषु भ्रमाः जायन्ते । यथा-

**व ब, प ष, भ म, प्र ग्र, ट ठ ढ, ञ ज, ध घ, श स ष, ज य** - इत्यादयः । एतेषामक्षराणां संशोधनसमये जागरुकता अपेक्ष्यते । पाण्डुलिपिं पुरतः स्थापयित्वा भ्रमसंशोधनं करणीयम्। हस्तलिखितपृष्ठसंख्याऽपेक्षा मुद्रणपत्रसंख्यायां भेदः भवेत्। अतः पृष्ठसंख्या, अध्यायाः, शीर्षकादि च संशोधनावसरे यत्नतः प्रत्यवेक्षणानि भवन्ति ।

***

# पञ्चमपरिच्छेदः

**शोधप्रबन्धनिर्माणस्य प्रविधिः** ( Method of Preparing a Thesis ) -

शोधकार्यस्य परिणामः शोधप्रबन्धरूपेण समुपस्थाप्यते । पाठकानां पुरतः शोधविषयः समुचितरीत्या समुपस्थापनीयश्चेत् तदवश्यं ग्रहणयोग्यं भवति । शोधनिबन्धलेखनात् प्रागेव शोधकर्त्ता संक्षिप्तरूपेण प्रारूपं ( Format ) प्रस्तौति । अनेनैव निर्दिष्टशोधप्रारूपेण संगृहीततथ्यस्य निबन्धात्मकमुपस्थापनं विधीयते । अद्यावधि भाषासाहित्यगवेषणाक्षेत्रे शोधप्रबन्धनिर्माणस्य काश्चन प्रविधयः प्रचलन्ति । तदनुसारं शोधकार्यस्य विवरणात्मकः परिणामः मुख्यतः भागत्रयेण समुपस्थाप्यते । तथाहि -

१. प्रारम्भिकः भागः पूर्वभागः वा ।

( Preliminary Section or Front matter )

२. मुख्यप्रतिपाद्यविषयभागः ।

( Main body of the Report )

३. सूचनात्मकः परिशिष्टभागः ।

( Reference Section )

**१. प्रारम्भिकः भागः पूर्वभागः वा** ( Preliminary Section or Front matter ) - शोधप्रबन्धस्य प्रारम्भिकभागे केचन प्रमुखाः अंशाः भवन्ति। यथा-I. शीर्षकपृष्ठम् ( The Title Page )

II. मार्गनिर्देशकस्य स्वीकृतिपत्रम्

( Approval Sheet of Guide )

III. कृतज्ञताज्ञापनपत्रम् ( Acknowledgement Page )

IV. भूमिका ( Preface )

V. विषयसूची ( Table of Contents )

VI. सारणीनां प्रतिकृतीनां च सूची ( List of Tables & Figures )

VII. साङ्केतिकशब्दसूची ( List of Abbreviations )

**I. शीर्षकपृष्ठम्** ( The Title Page ) - शोधप्रबन्धस्य प्रस्तुतिः शीर्षकपृष्ठपरिकल्पनया प्रारभ्यते । कस्यचित् मुद्रितपुस्तकस्य मुख्यपृष्ठमिव अत्रापि काश्चन सूचनाः भवन्ति । यथा -

- मुख्यपृष्ठस्योपरिभागे शोधप्रबन्धस्य नाम ( Name of the Topic or the Title of the Study ) वृहदाक्षरैः लिखितं स्यात् । संस्कृतभाषया लिखितस्य निबन्धस्य स्पष्टार्थं केचन तदधः आङ्ग्लभाषयाऽपि लिखन्ति।
- पृष्ठस्य मध्यभागे यस्योपाधये प्रबन्धोऽयं प्रस्तूयते, तस्य नाम ( Name of the Degree for which the Report is presented) स्यात्।
- तत्र सम्बन्धसंस्थायाः विभागस्य नाम लेखनीयम् । यत्र शोधप्रबन्धः समर्प्यते ।

  ( Name of the Faculty of the Institution to which the Report is submitted )
- मार्गदर्शकस्य शोधकर्त्तुश्च नाम यथास्थानं स्यात् ।

  ( Name of the Guide & Researcher )
- मुखपृष्ठस्य अधो भागे अनुष्ठानस्य नाम लेखनीयम्, यत्र साक्षात् शोधप्रबन्धः समर्प्यते ।

  ( Name of the Institution )
- एतदनुक्रमेण शोधप्रबन्धसमर्पणस्य समयः वर्षं वा उल्लेखनीयम् । ( The date or year of Presentation )

  उदाहरणं यथा -

# ध्वन्यालोकलोचनव्याख्यानभूतायाः अञ्जनटीकायाः समीक्षात्मकं संपादनम्

A Critical Edition of Anjana Commentary on

DHVANYALOKA - LOCAN

राष्ट्रियसंस्कृतसंस्थानस्य विद्यावारिध्युपाध्यर्थं शोधप्रबन्धः

A THESIS SUBMITTED FOR THE DEGREE OF

VIDYA VARIDHI ( Ph. D. )

of

RASHTRIYA SANSKRIT SANSTHAN, NEW DELHI.

मार्गदर्शकः
**डॉ. विन्ध्येश्वरप्रसादहिमांशुः**
*प्रवाचकः*
साहित्यविभागः
श्री स. के. सं. वि., पुरी

गवेषकः
**सत्यनारायण आचार्यः**
*शोधच्छात्रः*
साहित्यविभागः
श्री स. के. सं. वि., पुरी

SHREE SADASHIVA KENDRIYA SANSKRIT
VIDYAPEETHAM, PURI
1992

**II.** स्वीकृतिपत्रम् ( Approval sheet ) - शोधप्रबन्धसमर्पणसमये मार्गदर्शकस्य प्रमाणपत्रमपेक्ष्यते । समुचितसमये संस्थायाः नियमानुसारं स्वबुद्ध्या गवेषकः अपेक्षिततत्त्वानां संरक्षणं कृतवान् इति शोधप्रबन्धपरीक्षासमितेः अवगतये मार्गदर्शकस्य प्रमाणपत्रमिदं नितरामुपकारकम् । किञ्च प्रबन्धस्य मौलिकता पत्रेणानेन प्रमाणीक्रियते।

**III.** कृतज्ञताज्ञापनम् ( Acknowledgement ) - भारतीयपरम्परानुसारं कृतज्ञताज्ञापनं कश्चन आदर्शविधिः । गवेषकः शोधकार्यस्य प्रगतये प्राशासनिकं, शैक्षिकं च साहाय्यं स्वीकरोति । येषां महानुभावानां प्रेरणया मार्गदर्शनेन च गवेषणाकार्यं सफलतामेति, तेभ्यः मृदुमधुरया वाचा पत्रेऽस्मिन् सविनयं कार्तज्ञ्यं विनिवेदयति । अनेन विद्वांसः अधिकारिणश्च समुत्साहिताः परवर्त्तिनि काले अन्येभ्योऽपि संप्रेरयितुमुत्सहन्ते । अत्र प्रत्येकमपि कार्यं प्रति सहायतां कृतवद्भ्यः क्रमानुसारं कृतज्ञताः विनिवेद्यन्ते इति संस्कृतमयी परंपरा ।

**IV.** आमुखम् / मुखबन्धः / भूमिका ( Preface or Foreword ) - समग्रस्य शोधप्रबन्धस्य संक्षिप्तविषयविन्यासः, उद्देश्यम्, परिसरः, परिणामश्च भागेऽस्मिन् उपस्थाप्यते । प्राचीनशास्त्रीयपरंपरायां तु एतत् अनुबन्धचतुष्टयमिति कथ्यते । तदुक्तम् -

सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते ।
शास्त्रादौ तेन वक्तव्यः सम्बन्धः संप्रयोजनः ।।

इति श्लोकवा. १ / १७

अतः आमुखे -

- शोधविषयपरिसरः
- शोधविषयस्य उद्देश्यम्
- शोधविषयेण सह उद्देश्यस्य सम्बन्धः
- शोधप्रबन्धस्य पाठकश्चेत्यादिषु विषयेषु चर्च्चा क्रियते ।

केषांचन मते मुखबन्धेऽस्मिन् अधोलिखितजिज्ञासाः स्पष्टीभवन्ति । यथा -

* किमर्थम् अयमेव निर्द्दिष्टः शोधविषयः गृहीतः ?
* शोधपरीक्षणस्य सुपरिणामाः कुपरिणामाश्च के ?
* शोधविषये कः पर्यालोचनीयः विषयः गृहीतः ?
* राष्ट्रप्रगतये मानवीयोपकाराय शोधप्रबन्धस्य किं महत्त्वम् ?
* समाजे कीदृशपाठकवर्गस्य कृते शोधसन्दर्भोऽयमुद्दिष्टः ?

मुखबन्धः शोधविषयपरिसरमाश्रित्य क्षुद्रः बृहद् वा भवितुमर्हति। केचन मुखबन्धे एव संक्षिप्तरूपेण कृतज्ञताः विज्ञापयन्ति ।

**V. विषयसूची** ( Table of Contents ) -

शोधविषयस्य विहङ्गावलोकनाय एकस्मिन् पृष्ठे विषयसूची प्रस्तूयते । पाठकानां सौविध्यार्थं पृष्ठसंख्यासूचनया सह शोधप्रबन्धे प्रतिपादितविषयाणामुल्लेखः क्रियते । अत्रापि भूमिका, उपक्रमः / प्राक्कथनम्, अध्यायानां शीर्षक-उपशीर्षकप्रदर्शनपुरःसरं सूचना, चित्रसूची, सारणीसूची, उदाहरणश्लोकसूची, उद्धृतश्लोकसूची, सहायकग्रन्थसूची इति स्पष्टतया पृष्ठसंख्यानिर्द्देशेन लिखिताः भवेयुः ।

विषयसूचीनिर्माणं गवेषकस्य पाठसङ्कलनदक्षतां प्रमाणयति। शिल्पी यथा निर्जीवे प्रस्तरखण्डे स्वशिल्पकलाकौशलेन जीवनं सञ्चार्य

सौन्दर्यबोधं सृजति, तद् प्रस्तरखण्डमपि मूर्त्तिरूपं प्राप्य लोके पूज्यते; तथैव गवेषकस्य विषयसूचीनिर्माणदक्षतया शोधप्रबन्धस्य पाठकीयसौन्दर्यबोधः अनुभूयते ।

**VI. सारणीनां प्रतिकृतीनां च सूची** ( List of Tables & Figures ) -

यदि शोधसन्दर्भस्य कृते चित्राणि सारण्यः वा अपेक्ष्यन्ते, तर्हि तेषां सूची स्वतन्त्रपृष्ठासु भवेत् । सन्दर्भानुसारं तेषां शीर्षकं स्पष्टाक्षरैः उल्लिखितं स्यात् । निर्द्दिष्टपृष्ठायामपेक्षिताः सारण्यः चित्राणि वा पृष्ठासंख्याद्वारा निर्द्दिष्टाः स्युः । तत्र **क ख ग घ** - इत्यादिभिः अक्षरैः, **I II III IV** इत्यादिभिः रोमीयलिपिभिः वा तेषां संख्या उल्लिखिता स्यात् । यदि चित्राणां सारणीनां वा अधः काऽपि अपेक्षिता सुस्पष्टा सूचना नोल्लिख्यते, तदा तद्विषये किमपि ज्ञातुं न शक्यते ।

**VII. साङ्केतिकशब्दसूची** ( List of Abbreaviations ) -

साङ्केतिकशब्दसूचीनां प्रयोगविषये तथा कश्चित् निर्द्दष्टः नियमः न दृश्यते । केवलं पाठकानां स्पष्टावगतये एतेषां प्रयोगः । शोधप्रबन्धलेखने समयस्य कर्गजपृष्ठे च स्थानस्य सदुपयोगाय साङ्केतिकशब्दसूची उपयुज्यते। गवेषकः स्वशोधप्रबन्धे व्यवहृतानां साङ्केतिकशब्दानां सूचीं रचयेत् । साधारणतः संस्कृतभाषासाहित्ये शोधनिबन्धाः संस्कृतभाषया, आङ्ग्लभाषया क्वचित् च हिन्दीभाषयाऽपि उपस्थापिताः दृश्यन्ते । अतः अत्र संस्कृतभाषया आङ्ग्लभाषया च केषांचन सामान्यतः व्यवहृतानां साङ्केतिकशब्दानां सूची अधः प्रदीयते।

तत्र **आङ्ग्लभाषया** यथा -

A.D. - Anno Domini in the year of our Lord .
Anon - Anonymous ( Used when the author is not known )
BK., bks - Book, books
( C ) - Copy Right
Cf. ( Confer ) - Compare

Ch., Chs. - chapter, Chapters
Col., Cols. - Column , Columns
Comp. - Compiler or Compiled by
Ed. - Editor, Edition, Edited by
E.g. ( exempli gratia ) - For example
E. t. , al ( etalli ) - and others
N. D. - No Date
N.P. - No Place
No., Nos. - Number, Numbers
Op. Cit. - in the work cited
P. PP - Page, Pages
Par, Pars - Paragraph, Paragraphs
Pref. - Preface
Rev. - Revised by / revision / review
R. Rpt. - Reprint
Trans. / Tr. - Translator, Translation, Translated by
V. , V.V. - Verse, verses
V.D. - Various Dates
Viz ( Videlicet ) - Namely
Vol., Vols - Volume, Volumes
Vs. - Versus ( against ) etc.

संस्कृतभाषया प्रस्तुतस्य शोधप्रबन्धस्य कृते सामान्यतः अधोलिखितानि साङ्केतिकपदानि व्यवहर्त्तुं शक्यन्ते ।

अ. - अव्ययम्
अनु. - अनुवादः
अ.पु. - अग्निपुराणम्
अथर्व. - अथर्ववेदः
अमर. - अमरकोषः
आनन्द. - आनन्दलहरी
ऋक्. - ऋग्वेदः
का.प्र. - काव्यप्रकाशः
काव्या. - काव्यादर्शः
कुमार. - कुमारसम्भवम्
चन्द्रा. - चन्द्रालोकः
तै. उ. - तैतिरीयोपनिषद्
नैषध. - नैषधीयचरितम्
पञ्च. - पञ्चतन्त्रम्
भट्टि. - भट्टिकाव्यम्
भा.प्र. - भावप्रकाशः
मनु. - मनुस्मृतिः
सुधा. - सुधालहरी
सा.द. - साहित्यदर्पणः
ध्वन्या. - ध्वन्यालोकः
संपा. - संपादनम्
पा.टी. - पादटीका
मू.पा. - मूलपाठः
सं. - संपादकः

**२. मुख्यप्रतिपाद्यविषयभागः** ( Main body of the report ) -

शोधप्रबन्धस्य मुख्यप्रतिपाद्यविषयोपस्थापने अधोलिखिताः उपायाः भवितुमर्हन्ति ।

( 1 ) उपक्रमः ( Introduction )

( 2 ) मुख्याकृतिः ( Main body & Chapter )

( 3 ) उपसंहारः ( Conclusion )

**5.1.उपक्रमः** ( Introduction ) - शोधप्रबन्धस्य प्रमुखः अंशः भवति उपक्रमः । अत्र शोधकर्त्ता अनुसन्धेयस्य अपेक्षितस्य सन्दर्भस्य विषये सूचयति । अतः अंशेऽस्मिन् शोधसमस्या उपस्थापनीया भवति। पाठकानां रुचिवर्द्धनार्थं तथा उत्कण्ठाप्रकटनार्थं चात्र शोधकर्त्ता प्रयतते, येन विदग्धः पाठकः संपूर्णमपि शोधप्रबन्धं श्रद्धया पठत्येव । अतः उपक्रमे अधो लिखिताः बिन्दवः अनुसरणीयाः ।

* शोधसमस्यायाः उपस्थापनम् ।
* शोधसमस्यायाः पृष्ठभूमिः ।
* शोधसमस्यायाः युक्तियुक्तता ।
* शोधसन्दर्भस्य उद्देश्यम् ।
* शोधसन्दर्भे परिकल्पिततथ्यस्य सीमानिर्द्धारणम् ।

उपक्रमः शोधप्रबन्धस्य प्रवेशद्वारमिति कथ्यते । यदि उपक्रमः नीरसः भवति, तदा सहृदयः पाठकः संपूर्णं निबन्धं नीरसं मत्वा नैव पठति । अतः सरलया मधुरया च भाषया शोधप्रबन्धस्य मौलिकतां, उपादेयतां, सांप्रतिकसमाजे समाजोपयोगितायाः यथार्थतां च उपक्रमे शोधकर्त्ता उल्लिखेत् ।

**5.2 मुख्याकृतिः** ( Main body & Chapter ) - शोधकर्त्तुः प्रतिभाबलेन शब्दसंयोजनाकौशलेन च शोधसन्दर्भस्य मुख्याकृतिः प्रस्तूयते । एतदर्थं

सुनिर्द्दिष्टः कश्चित् नियमविशेषः नैव निर्द्धार्यते । अतः अयं भागः विविधैः उपभागैः समलंकृतः भवति । परिच्छेदादिभिः अध्यायादिभिः वा मुख्याकृतिः विभज्यते । शोधसन्दर्भस्य समुचितरीत्या समुपस्थापनाय अत्रैव शोधकर्त्ता स्वरचनाचातुर्यं प्रदर्शयति । अध्यायानां परिच्छेदानां वा संर ाविषये अध्ययनपरिसरं परिशील्य शोधकर्त्ता निर्णयं स्वीकरोति।

अध्यायेषु परिच्छेदेषु वा युक्तिबलेन विदुषां मतानि उपस्थाप्य क्रमानुसारं सज्जीकरोति । एकं प्रमुखमंशं स्वीकृत्य एकस्मिन् अध्याये परिच्छेदे वा पर्यालोचयति । तस्य अंशस्य स्वारस्यं विचार्य उपयुक्तं शीर्षकम्, उपशीर्षकम् वा परिकल्पयति । शीर्षकं बृहदाक्षरैः लेखनीयम्। उपशीर्षकं पार्श्वशीर्षकमित्यपि कथ्यते । एतत्तु उपविभागस्य कृते उपयोगि। केचन पार्श्वशीर्षकाणां कृते साङ्केतिकसंख्यामपि व्यवहरन्ति। यथा - प्रथमपरिच्छेदस्य प्रथमपार्श्वशीर्षकस्य कृते **1.1.**, ततः द्वितीयस्य कृते **1.2.** इत्यादिभिः व्यवहारः दृश्यते । मुख्याकृतौ कस्यचित् अध्यायस्य परिच्छेदस्य कृते वा स्वतन्त्रा पृष्ठासंख्या नोल्लिख्यते , अपितु प्रथमतः अन्तिमपर्यन्तम् उपसंहारं यावद् वा पृष्ठाङ्काः प्रदीयन्ते । प्रत्येकस्य परिच्छेदस्य पृष्ठासंख्या प्रायः समाना भवति चेत् निबन्धे स्वारस्यमनुभूयते। तथापि विषयप्रतिपादनदृष्ट्या पृष्ठसंख्यायां भेदः दोषाय न भवति ।

**5.3. उपसंहारः** ( Conclusion ) - प्रस्तुतस्य शोधप्रबन्धस्यान्तिमे भागे उपसंहारः शोभते। केचन उपसंहारं स्वतन्त्रपरिच्छेदरूपेणापि परिकल्पयन्ति। शोधप्रबन्धस्य विविधपरिच्छेदेषु प्रतिपादितविषयाणां सूत्राकारेण अत्रैव प्रतिपाद्यते । शोधकर्त्ता महता परिश्रमेण शोधस्य यं सारं निःसारयति, तदेवात्रोल्लिखति । अत्रैव शोधसिद्धान्तः प्रख्याप्यते। उपसंहारस्य पाठेन पाठकः समग्रस्य सन्दर्भस्य सारभूतं तथ्यमनायासेन

संगृह्णाति । अत्रैव शोधकर्त्ता स्ववक्तव्यमुपस्थापयितुमवसरं प्राप्नोति। निबन्धलेखनसमये प्राप्तं किमपि नूतनतथ्यं निजमतानुसारं गवेषकः अत्रैव उपस्थाप्य शोधसन्दर्भस्य पूर्णतामुद्घोषयति । अतः यथा भूमिका अध्यायेषु परिच्छेदेषु वा नान्तर्भवति, तथैव उपसंहारोऽपि स्नतन्त्रः भवेत् । भूमिकायां प्रस्तावितस्य शोधसन्दर्भस्य अध्ययनपरिसरादिप्रतिपाद्यविषयविषये यथा स्पष्टा प्राक्सूचना प्राप्यते, तथैव उपसंहारे शोधसन्दर्भस्य संक्षिप्तं सारमर्म पाठकहृदयं सन्तोषयति।

**3.सूचनात्मकपरिशिष्टभागः** ( Reference Section )-

मुख्यप्रतिपाद्यविषयभागे व्यवहृतानां सूचनात्मकोपायानामस्मिन् भागे विचार्यते । शोधकर्त्ता केन प्रकारेण सिद्धान्तपक्षमुपस्थापयितुं प्रयतितवान् इत्यनेन ज्ञायते । संगृहीततथ्यानां विधिपूर्वकं सन्निवेशनं नाम गवेषकस्य सृजनशक्तेः परिचयः प्राप्यते । पाठकानां कृते शोधसन्दर्भस्य महनीयतां प्रतिपादयितुं सूचनात्मकपरिशिष्टभागः परिकल्पितोऽस्ति । अत्र ग्रन्थादीनामितिवृत्तिः ( Bibliography ) परिशिष्टम् ( Appendix ), अनुक्रमणिका ( Index ) चान्तर्भवन्ति ।

**3.1.** - ग्रन्थादीनाम् इतिवृत्तिः ( Bibliography )- शोधविवरणस्य प्रस्तुत्यर्थं शोधकर्त्ता अध्यायान्ते ग्रन्थादीनामितिवृत्तिं स्थापयति । ग्रन्थलेखनाय संगृहीतस्य तथ्यस्य कृते सहायकग्रन्थानां स्पष्टं पूर्णं वर्णनात्मकं च विवरणं प्रदीयते । अर्थात् तथ्यसंग्रहणे येषां पुस्तकानाम्, पत्रिकाणाम्, वार्त्तापत्राणां वा विवरणानि प्राप्तानि, तेषाम् अकारादिवर्णक्रमान्वयेन उपस्थाप्यते । तत्र लेखस्य उपनाम प्रथमं लिख्यते । ततः संपूर्णं नाम। पुस्तकस्य नाम स्थूलाक्षरैः लेखनीयम् । तदनन्तरं पुस्तकस्य प्रकाशनकालः, प्रकाशनसंख्या वा उल्लेखनीयाः । तत्र पुस्तकस्य कृते

यथा- **Murty. M. Srimannarayana, Methodology in Indological Research**

भारतीयविद्याप्रकाशन, दिल्ली, १९९१

शोधलेखस्य कृते तु प्रथमम् उपनामपूर्वकं संक्षिप्तं नाम, ततः सन्दर्भस्य शीर्षकम्, तदनन्तरं पत्रिकायाः नाम च अधः रेखाङ्कितं स्यात्। पत्रिकायाः प्रकाशनसंख्या, प्रकाशकः, प्रकाशनकालः, प्रकाशितलेखस्य पत्रिकायां पृष्ठसंख्या च भवन्ति । यथा -

Satapathy H. K. , कालिदासस्य साहित्ये दर्शनस्य प्रभावः , श्रीजगन्नाथज्योतिः - Volume - 7 , S.J.S.V., 2002 संस्कृतभागः-पृ.१८

**3.2.परिशिष्टम्** ( Appendix ) शोधसन्दर्भस्य प्रस्तुत्यनन्तरं परिपूरकतथ्यत्वेन परिशेषे किञ्चित् सूच्यते । यदि किञ्चित् तथ्यं तथैव उद्धृतमस्ति, तर्हि तत्र परिशिष्टे स्पष्टीक्रियते । शोधसन्दर्भे बिन्दुशः चर्च्चा क्रियते, किन्तु परिशिष्टे अपेक्षितबिन्दुनः विषये चर्च्चा सीमिता भवति । अनेन गवेषकस्य अभिप्रायं पाठकः स्पष्टमवगच्छति। कदाचित् प्रबन्धे वर्णितस्य कस्यचित् बिन्दुनः सुविस्तृता चर्च्चा अपेक्ष्यते, तदा अपेक्षितं प्रमाणम्, सारणी, मूलतथ्यं वा परिशिष्टभागे योज्यते । संगृहीततथ्यस्य परिपूरकतया परिशिष्टमवश्यं योज्यम् ।

**3.3.अनुक्रमणिका** ( Index ) शाधप्रबन्धे व्यवहृतानाम् उद्धृतानां वा विषयाणां वर्णानुसारं क्रमः लिख्यते । तत्र निर्द्दिष्टपृष्ठसंख्यया सह अक्षरक्रमेण सूचना भवति । यथा - श्लोकानुक्रमणिका, सूत्रानुक्रमणिका, कारिकानुक्रमणिका, नामानुक्रमणिकाप्रभृतयः भवन्ति ।

संस्कृतभाषासाहित्यस्य व्यापकक्षेत्रत्वात् **संस्कृतशोधप्रविधिरपि** बहुव्यापकः भवति । अस्मिन् लघुग्रन्थे तु सर्वथा अत्यावश्यकाः केचन विषयाः पर्यालोचिताः सन्ति इत्योम् ।

## सहायकग्रन्थसूची (Bibliography )

१. अनुसन्धानस्य प्रविधिप्रक्रिया, डॉ. नगेन्द्र,रा.सं.संस्थानम्,नईदिल्ली

२. गवेषणा प्रविधि, डॉ.सुबोधकुमारचाटार्जी, विद्यापुरी , १९७९ ।

३. Methodology of Research in Education, Kulbirsingh Sidhu, Sterling publishers Pvt. Ltd., New Delhi, 2002.

४. Methodology in Ideological Research, M.Narayan Murty, Bharatiy Vidya Prakashan, varanasi, 1991.

५. A study of the descriptive catalogus of Sans. Manuscripts, Revati P. Desmukh, Rupa Offset Publisher 1996.

६. Research methods in Education, Dr. Radha Mohan, Neelakamal Publications Pvt. Ltd., 2005.

७. Elements Research Methodology, K.C.Dash, Choukhamba Orientilia, Delhi, 1995.

८. Bharatiya Grantha sampadana Sastra Pravesini ( Sanskrit Translation of an introduction to Indian Textual Criticismof Prof. S.M. Katre.) , Prof. L.N. Bhatta, Dr.J.Ramakrishna, Dr.V.Jaddipal, R.s. vidyapeethaṃ, Tirupati 2002 .

९. Manuscriptology , K. Maheswaran Nair, Swantham Books, Trivendrum, 1998.

१०. अभिज्ञानशाकुन्तलम् , Dr. G.N.Mahapatra, Neelakantha Press, cuttack, 1995.

११. संस्कृतशिक्षापद्धति, सीतारामचतुर्वेदी, वाराणसी, सं.- २०२६

१२. संस्कृत शिक्षणं , डॉ. रघुनाथ सफायां, हरियाणा साहित्य अकादमी, चण्डीगड, १९९७ ।

**डॉ.सत्यनारायण आचार्य:**, उपाचार्य:,
साहित्यविभागाध्यक्षश्च, राष्ट्रियसंस्कृतविद्यापीठम्,
(मानितविश्वविद्यालय:)
तिरुपति: - ५१७ ५०७, आ.प्र.



पिता - श्रीघनश्याम आचार्य:
माता - श्रीमती रुक्मिणी आचार्य:
जन्म - १५ - ०४- १९६४

## शिक्षा

साहित्याचार्य: (एम्.ए.), विद्यावारिधि: (पी.एच्.डी), शिक्षाशास्त्री (वी.एड्.) लब्धस्वर्णपदक:

## संस्कृतसेवानुभव:

१९८३ त: अद्यावधि लोकभाषाप्रचारसमिति-प्रियवाक्परिषद्-ओडिशासंस्कृत-अकादमी-संस्कृतभारतीप्रभृतिसंस्थामाध्यमेन सार्धैक-सहस्राधिकानां संस्कृतसम्भाषणशिविराणां संस्कृतशिक्षकप्रशिक्षणशिविराणां च प्रशिक्षकत्वेन परिचित: । १९९३-९४ शैक्षिकवर्षे श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठे साहित्यविभागे अंशकालिकाध्यापकत्वेन संस्कृतसाहित्याध्यापनावृत्तिमारभ्य १९९४-९५ वर्षे उपाध्युत्तरसंस्कृतमहाविद्यालये वलाङ्गीरे, १९९५ त: २००१ वर्षेषु आगलपुरविज्ञानमहाविद्यालये च सेवां विधाय २००२ त: राष्ट्रियसंस्कृतसंस्थानस्य श्रीसदाशिवपरिसरे साहित्याध्यापकत्वेन नियोजित: । २००७ वर्षत: तिरुपतिस्थे राष्ट्रियसंस्कृतविद्यापीठे साहित्यविभागे उपाचार्यत्वेन नियुक्तिं सम्प्राप्य UGC पक्षत: विविधपरियोजनासु च समायोजकत्वेन कार्यरतोऽस्ति ।

## पुरस्कारा:

१) १९८९ वर्षे - नवोदितप्रतिभापुरस्कार: (२००० रूप्यकात्मक:) - मध्यप्रदेशसंस्कृत-अकादेमीपक्षत: ;
२) १९९० वर्षे - अभिनवनाट्याचार्योपाधि: – मध्यप्रदेशसंस्कृत-अकादेमीपक्षत: ;
३) २००० वर्षे - प्रज्ञाप्रभोपाधि: – मयूरभञ्जजिल्लासंस्कृतशिक्षकमहासङ्घ: (ओडिशा) पक्षत: ;
४) २००१ वर्षे – संवर्द्धना - विश्वकल्याणफाउण्डेशन्स, नवद्वीप: (पश्चिमवङ्ग) पक्षत: ।

## संस्कृतपत्रिकासम्पादनम्

(१) प्रियंवदा तथा प्रियवाक् (द्वैमासिकी संस्कृतपत्रिका)- १९९१-९६ (२) संस्कृतमन्दाकिनी - १९९० (३) पौर्णमासी १९९१-९३ (४) सन्दर्भसम्भार: (२००२) (५) श्रीसदाशिवम् (२००२) (६) साहित्यसौरभम् (२००१-०३) (७) हिमांशुश्री: (२००५) (८) प्रथमप्रवेशिका (२००८) (९) मध्यमप्रवेशिका (२००८) (१०) लोकप्रज्ञा (२००९-१०) (११) बुधरञ्जनी (२००९-१०)(१२) वाग्वर्धिनी (२०११-१२) (१३) संस्कृतशिक्षा (१४) संस्कृतनिबन्धमाला।

## कृतय:

(१) ध्वन्यालोके काव्यसम्पद: (१९९२)
(२) संस्कृतं वदन्तु (१९९४)
(३) शेषसन्ध्या (ओडिआ-कविता-सङ्कलनम् (२००२)
(४) संस्कृतशोधप्रविधि: (२००५)
(५) विज्ञानयुगे संस्कृतसाहित्यस्य भूमिका (२००९)
(६) संस्कृतकाव्यसामग्री (२०१०)
(७) मम संस्कृतशोधपत्रमाला (२०११)
(८) साहित्यादर्श: (२०१२)
(९) ध्वन्यालोकलोचनव्याख्यानभूताया अञ्जनटीकाया: समीक्षात्मकं सम्पादनम् (२०१२)
(१०) दशरूपकम् (२०१२)